7

THE

# KASHI-SANSKRIT-SERIES

*( HARIDÂS SANSKRIT GRANTHAMĀLĀ )*

## NO. 90

( Alankara Section, No. 4 )

# काव्यकल्पलतावृत्तिः

श्रीअमरचन्द्रयतिनिर्मिता

अरिसिंहकृतसूत्रसहिता ।



PRINTED PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office, Vidya Vilas Press.*

*North of Gopalmandir, Benares City.*

1931.

THE

# KĀSHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

## NO. 90.

( Alaṅkāra Section No. 4 )

THE

# KĀVYAKALPALATĀVṚTTI

WITH SUTRAS ( TEXT ) OF ARISINHA

By

**AMARA-CHANDRA YATI.**

Edited

*With an Introduction etc.*

By

SAHITYOPADHYAYA

PANDIT JAGANNATH SASTRI HOSHING

Head Pandit, Cutting Memorial High School, Benares.



PRINTED-PUBLISHED & SOLD BY

JAI KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1931.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

९०

अलङ्कारविभागे (४) चतुर्थं पुष्पम् ।

# काव्यकल्पलतावृत्तिः

श्रीअमरचन्द्रयतिनिर्मिता

अरिसिंहकृतसूत्रसहिता ।

'काटन्न मिमोरियल हाई स्कूल बनारस'नाम्नि विद्यालये प्रधानपण्डितेन

साहित्योपाध्यायेन होशिङ्ग - इत्युपाख्येन

श्रीजगन्नाथशास्त्रिणा सपरिष्कारं संशोधिता.

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।

१९८८

॥ श्रीः ॥

# * भूमिका *

**उपक्रमः**—अद्यत्वे किल सर्वतः पठनपाठनशैलीमनुसरद्भिर्विद्वद्भिः पुस्तकसौलभ्यद्वारा विद्यार्थिजनोपकारं चिकीर्षुभिर्यत्रतत्र मुद्रणयन्त्रालयसाहाय्येन क्रियते पुस्तकानां प्रकाशनम्। तत्रापि साम्प्रतिकप्रणाल्या परीक्षोपयुक्तानि तु पुस्तकानि निर्बाधं मुद्रणव्यवसायिभिः प्रकाश्य प्रचारमानीयन्ते। पुस्तकमात्रं नयनगोचरीकुर्वतां सर्वेषामेव विदुषामिदमापतति नेत्रयोः पुरस्तात् यत्—नैकमपि पुस्तकं भूमिकामन्तरा प्राकाश्यमुपगच्छतीति। सैषा प्रणाली किमुपादेया हेया वा? इति समुत्पन्ने मनसि विचारे समुपादेयैवेति प्रतिभाति समञ्जसमुत्तरम्। यतो हि प्रकाशको गवेषकः सन् विद्यार्थिजनोपकृतये यतमानः सर्वं ग्रन्थस्य ग्रन्थकर्तुश्च विषये यथोपलब्धि सङ्गृह्णाति सर्वतः प्रसृतमैतिहासिकं वृत्तम्। तथैव साम्प्रतं मुद्रितस्य पुस्तकस्यापि भूमिकालेखनं सुतरां साम्प्रतमिति तदर्थमायस्यते लेखन्या।

**मुद्रणोपक्रमः**—अथेदानीमारभ्यते काव्यकल्पलताकविशिक्षावृत्तिर्नाम ग्रन्थो मुद्रयित्वा प्रकाशयितुम्। साम्प्रतं सर्वत्रैव कविसम्प्रदायस्योच्छिन्नप्रायत्वेन कवित्वसम्पादकसंस्कारानुद्भवात्, तदुत्पत्तावपि यथाकथञ्चित् सत्काव्यप्रयोजककविसम्प्रदायानभिज्ञानाद्वा कविता न चारुत्वमावहतीति तत्साधनाय परममुपयोगी ग्रन्थ इति तद्दर्शनपरिशीलनाभ्यां निर्णेतुं शक्यते। अत एव वाराणसेयराजकीयसंस्कृतपाठशालीयपरीक्षासमितिसदस्यैः संख्यावद्भिः साहित्यशास्त्रिपरीक्षायां विचारान्ते निर्णीय कवितासाधकतया पाठ्यग्रन्थे संनिवेशितोऽयं पुराऽस्मद्गुरुवरमहामहोपाध्यायपण्डितवरश्रीदरामशास्त्रितैलङ्गपूज्यपादैः प्रकाशितः। सच सम्प्रति दुर्लभ इति श्रीजयकृष्णदासगुप्तश्रेष्ठिवरैस्तत्प्रकाशनायाऽभ्यर्थितोऽहं प्रावर्तिषि पुनर्मुद्रयितुमेनम्।

**ग्रन्थकृत्परिचयः**—सोऽयं काव्यकल्पलतावृत्तिनामा ग्रन्थः सूत्रतद्वृत्तिरूपेण द्वैविध्यं धत्ते स्ववपुषः। तत्र तावत् सूत्राणि विद्वद्रत्नं श्रीअरिसिंहः प्रणिनायेति वृत्तिकृदुल्लिखितात् 'मत्वाऽरिसिंहसुकवेः कवितारहस्य'मिति द्वितीयपद्यस्यांऽशात् स्पष्टं प्रतीयते। एष सूत्रकर्ताऽरिसिंहः श्वेताम्बरजैनसम्प्रदायावलम्बी धोलकाराणावीरधवलस्य जैनमन्त्रिणो वस्तुपालस्याश्रयमुपाश्रितस्तत्प्रशंसायां निबबन्ध 'सुकृतसङ्कीर्तना'भिधं ग्रन्थम्। वस्तुपालकालश्च १२४२ A. D. ईशवीयो वत्सरः। वस्तुतस्तु वीरधवलतनयस्य वीसलदेवस्य समयेऽसौ न्यवसदिति विद्वांस ऐतिहासिकाः पुरातत्त्वविदः। अस्य पितुर्नाम लावण्यसिंहो लवणसिंहो वेति केचित्। श्रीमत आसडस्य कृतेः विवेकमञ्जर्याः विक्रमशाके १३३२ मिते बालचन्द्रकविकृतटीकाया उपोद्घाते समाप्तौ च प्रस्तावितादंशादेतत् स्थिरीकर्तुं शक्यते यत्—'श्रीभिल्लमालाकुले कटकराजनामकात्

महतो जैनात् अनलदेव्यां पुत्रद्वयं श्रीआसड-जासड-नामकमुदभूत् । तत्र श्रीमान् आसडः श्रीमदभयदेवसूरिसकाशाल्लब्धविद्यः प्रणिनाय विवेकमञ्जरीम्, उपदेशकन्दलीम्, आह्वानप्रकरणम्, सरसां कालिदासकृतमेघदूतटीकां च । मेघदूतकाव्यटीकानिर्माणेन गुर्जरदेशीयात् कस्माच्चिद्राज्ञः 'कविसभाशृङ्गार' इति पदवीमविन्दत । तस्यैव द्वितीयपत्नी पृथ्वीदेवी प्रासूत सुकविमरिसिंहमिति'। एतावता प्रवृत्तकेन प्रकृते समागतमिदं यत्–श्रीआसड इति सूत्रकृत्पितुर्नामेति । एतस्मादधिकमेतस्य विषये नोपलभ्यते किञ्चित् ।

**वृत्तिकृत्परिचयः**—काव्यकल्पलतायाः कविशिक्षाया वृत्तिं श्रीमान् अमरयतिर्जग्रन्थेति वृत्तौ दर्शितादाद्यात् 'अमरेण यतीन्दुना' इति पद्यात्, चित्रप्रकरणेऽष्टारचक्रबन्धगतात् 'वाचं स्मृत्वा यतीन्द्रेण काव्यकल्पलता कृता, तारश्रीरमरेणेयम्' इति पद्याच्च स्फुटं प्रतीयते । सचाऽयं श्वेताम्बरजैनधर्मावलम्बी वायडगच्छवसतेर्विवेकविलासकर्तुर्जिनदत्तसूरेरन्तेवासीति तदीयाद् ग्रन्थान्तिमात्पद्यात् 'श्रीमद्वायडगच्छवारिधिविधो'रित्याद्यात् स्फुटं ज्ञायते। असावपि वीरधवलतनयस्य अह्विलवाडसिंहासनाधीश्वरस्य वीसलदेवस्य मन्त्रिणो वस्तुपालस्य न्यवसत् समये । एषोऽमरचन्द्रो न केवलं वृत्तिमेव न्यबध्नादपितु श्रीमतोऽरिसिंहस्य सूत्राणां पूर्तिं परिवृत्तिं च वाऽकृतेति 'किञ्चिच्च तद्रचितमात्मकृतं च किञ्चिद्व्याख्यास्यते' इति पद्यांशात् स्फुटमेव। अमुना च एतेऽन्येऽपि ग्रन्थाः कृताः–(१) पद्मानन्दापरनामधेयं जिनेन्द्रचरितं, (२) स्यादिशब्दसमुच्चयः, (३) बालभारत, (४) द्रौपदीस्वयंवरः, (५) छन्दोरत्नावलिः, (६) काव्यकल्पलतापरिमलः, (७) अलङ्कारप्रबोधश्च । तत्राऽन्तिमग्रन्थरत्नत्रयस्य वृत्तावस्यामेवोल्लेखः श्रीअमरचन्द्रेण कृतः । इतरेषु तु द्रौपदीस्वयंवरस्य पण्डितवामनशास्त्रिणा स्वीये महाराष्ट्रभाषीयटीकासंवलितकाव्यकल्पलतापुस्तकस्योपोद्घाते, बालभारतस्य च देमहोदयेनांऽऽग्लभाषोपनिबद्धे 'संस्कृतकवीनामितिहास'नाम्नि पुस्तके समुल्लेखः कृतः । अवशिष्टयोश्च पीटर्सन्, बुइलर, आफ्रेख्टसूचीपत्रेषु यथाक्रमं नामनिर्देशोपलब्धिः । राजशेखरमतेन वृत्तिकृदमरचन्द्रोऽरिसिंहस्य शिष्यः सहाध्यायी वासीदिति श्रीधरभाण्डारकरप्रकाशितपुस्तकसूचनातोऽवगम्यते ।

**ग्रन्थपरिचयः**—एतस्यां काव्यकल्पलतावृत्तौ ये विषयास्तेषां तालिका विषयसूचीनाम्नाऽत्र सङ्गृहीता, परं ग्रन्थपरिचयावसरे सामान्यतः किञ्चिदिहापि प्रदर्श्यते—शिष्टाचारं परिपाल्य प्रथममनुष्टुप्छन्दसः, भिन्नानामितरेषामपि छन्दसां च सिद्धिप्रकारः, तदुपयोगिशब्दसङ्ग्रहः, छन्दोबद्धवादसिद्धिः, वर्ण्यवस्तुस्थितिश्चेति प्रथमेप्रताने ग्रन्थकृता प्रतिपादितम् । द्वितीये–रूढयौगिकमिश्रान् शब्दान् सविस्तरं विचार्य तादृशान् शब्दान् निरूप्याऽनुप्रासलाक्षणिकादिकं प्रतिपादितम् । तृतीये–श्लेषस्य व्युत्पत्तिं सर्ववस्तूनामुद्दिष्टवस्तूनां च

वर्णनमद्भुतवर्णनप्रकारं च प्रपञ्च्य चित्रकाव्यप्रकार उपवर्णितः। चतुर्थे-ऽलङ्काराभ्यासप्रकारमुपवर्ण्य वर्ण्यवस्तूनामाकारक्रियादिकं च प्रदर्श्य संख्यावाचकशब्दानां विशिष्टं वर्णनं कृत्वाऽन्ते समस्यापूरणप्रकारः प्रदर्शितः, एवंच ग्रन्थसमाप्तिरपि कृता।

**अस्य वैशिष्ट्यम्**—दशमशताब्द्यामवस्थितस्य राजशेखरस्य काव्यमीमांसाऽपि क्वचिदंशे कवितानिर्माणविधिमुपदिशति न पुनः साकल्येन। तत्र पुनः साहित्यस्याऽलङ्कारशास्त्रस्य वा विषयाः प्रतिपादिताः, तथाच सर्व एव आकरग्रन्था एतादृशाः। परं केवलं कवितानिर्मितिविधिं नैते प्रतिपादयन्तीत्यतिरोहितमेव विदुषाम्। प्रसिद्धस्य काश्मीरकस्य राज्ञोऽनन्तदेवस्य सभायां वर्तमानो महाकविः क्षेमेन्द्रः कविकण्ठाभरणं नाम स्वल्पकायं कविताशास्त्रस्य मूलतत्त्वबोधकं ग्रन्थं निर्ममौ, परमभ्यासकर्तॄणां कृते न सोऽपि पर्याप्त इति। द्वादशशताब्दीकस्य जयसिंहसिद्धराजस्य समये निर्मिता जयमङ्गलाचार्योपज्ञा-कविशिक्षाऽत्यन्तं स्वल्पेति साऽपि नोपयुक्ता सुतराम्। हलायुधकृतं कविरहस्यं तु केवलं क्रियाप्रयोगवैचित्र्योद्बोधकमित्येकदेशीयमेव। इत्थमिदमापतितं यत् अभ्यसितुः कृते तदिदं ग्रन्थरत्नद्वयं काव्यकल्पलता—कविकल्पलताभिधं परमोपयोगितया भूषणायते। तत्रापि कविकल्पलता तु नैतस्याः काव्यकल्पलतायास्तुलनामारोढुं क्षमा, साच साकल्येन एतस्या एवाऽनुकृतिः, बहुंशेषु तु सैव वर्णावलिरक्षरशोऽनुसृता, क्वचिच्च ग्रन्थसारल्यायैतद्गतो विस्तरोऽपि संक्षेपं नीतः। 'असतोऽपि निबन्धेन'—इत्यारभ्य 'ऐक्यमेवाऽभिसंमतम्'-इत्यन्तः प्रथमप्रताने पञ्चमस्तबकस्थः, तथैवाऽन्यत्रापि बहुत्र वर्तमानो ग्रन्थोऽक्षरशोऽनुकृतिं भजते। एवं कवितानिर्माणोपयोगिग्रन्थेष्वयमेव सर्वेभ्यः श्रेष्ठतामावहतीति वैशिष्ट्यमेतस्य सिद्ध्यति।

**समयनिर्णयः**—सूत्रवृत्तिकृतौ वस्तुपालवीसलदेवयोः सत्ताकाले विक्रमीयत्रयोदशशताब्द्यां न्यवसतामिति पूर्वमुपरिष्टात् प्रदर्शितम्। 'सलेमसाहि' इत्यपराभिधेयजहाँगीरनृपतिराज्ये निवसता तपागच्छवासिहीरविजयसूरिशिष्येण शुभविजयगणिना विजयदेवसूरिप्रार्थनया शररसरसभूमि(१६६५)संमिते वैक्रमे शतके काव्यकल्पलताया मकरन्दाख्या व्याख्या निरमायि। सचाऽयं टीकाकृत् सप्तदशे शतके यदमुष्य ग्रन्थस्य टीकां निरमादित्यतस्ततः पूर्वमस्य स्थितिरिति स्पष्टम्। अन्यच्च शार्ङ्गधरपद्धत्यां 'नागविशेषे शेषे' इति पद्यस्य देवेश्वर एव कर्तृत्वेन निर्दिष्टः। शार्ङ्गधरपद्धतिसमयश्च विक्रमीयपञ्चदशशताब्द्या आरम्भः। ततस्तत्पूर्वं देवेश्वरस्य सत्ताकालः। अयं देवेश्वरः कविकल्पलताया रचयिता, मालवाधीश्वरमहामात्यस्य वाग्भटस्य सूनुरेकं समस्यापूर्तिश्लोकं, त्रयोदशचतुर्दशशताब्द्यन्तरे शासतः चौहानवंशीयस्य राज्ञो हम्मीरमहीमहेन्द्रस्य प्रशंसायां निबबन्धेति चतुर्दशशताब्द्यारम्भकाले तत्सत्ताऽऽसीदिति ज्ञायते। सच

कविकल्पलताग्रन्थः प्रस्तुतग्रन्थादनन्तरं निर्माणपदवीमागत इति तत्त्वविदः । प्रस्तुतग्रन्थे अनुष्टुभः शासने पश्चात्तरोदाहरणे 'कुमारपाल भूपाल' इति पद्येन त्रयोदशशताब्दीकस्य कुमारपालनाम्नो नृपालस्यापि समुल्लेखात् स एव कालः समागच्छति । तथाच चतुर्दशशताब्द्याः पूर्वं त्रयोदशशताब्दी विक्रमीया सूत्रवृत्तिकृतोः समय इति निर्विवादम् ।

**प्रस्तुतपुस्तकस्यादर्शः**—एतस्य पुस्तकस्य पूर्वं वारद्वयं मुद्रणमभूत प्रथमं तावदस्मद्गुरुवरमहामहोपाध्यायश्रीद्दरामशास्त्रितैलङ्गसंशोधितं काश्यां १८८६ ईशवीयवत्सरे प्रकाशितं, द्वितीयं पण्डितवामनशास्त्रि-इसलामपुरकर-महाशयैः सानुवादं संशोधितं मोहमय्यां १८९१ ईशवीयेऽब्दे प्रकाशितम् । तत्र महाराष्ट्रभाषानुवादमयं सवृत्तिसूत्रं द्वितीयं पुस्तकं नास्माकमादर्शोपयोगि, यतस्तत्र केवलमनुवादो न मूलग्रन्थः, परं तान्येव संस्कृतोदाहरणानि तथैव न्यस्तानि । अपिचैतत्पुस्तकं भूमिकालेखनसमयेऽस्माकं दृष्टिगोचरतामुपगतम् । प्रथमं पुतस्कमेवाऽस्माकमादर्शत्वेन पुरो वर्तते । वस्तुतस्तदेवाऽऽदर्शपुस्तकमादाय प्रवृत्तमस्माभिरेतन्मुद्रणाय । मुद्रणारम्भे नातिशुद्धमपूर्णं चैकं हस्तलिखितं पुस्तकमस्माभिः सुहृद्वरभारद्वाजश्रीगङ्गाधरशास्त्रिणां तत एवोपलब्धं ख०सङ्केतेन व्यवहृतम् ।

**उपसंहारः**—इत्थं पुस्तकद्वयमवलम्ब्यापि मुद्रितपुस्तकमात्रसाहाय्येन संशोधनं कृतम् । संशोधनकर्मणि गृहीतभारेणापि मया कार्यान्तरव्यग्रतया मतिमान्द्येन वा यदशुद्ध्यादि कचिद् दूरीकर्तुं नाशक्यत, तत्राध्यापका अध्येतारश्च मां क्षन्तुमर्हन्ति । भूमिका-प्रकरणसूची-विषयसूची-कारिकानुक्रमणिकोदाहरणपद्यसूची-शुद्धिपत्रादिभिः पुस्तकसंस्करणरूपेण मदीयेन व्यापारेण यदि केषाञ्चिदपि कश्चिदप्युपकारः स्यात्तर्हि सफलपरिश्रममात्मानं मन्येय । यत्प्रसादादधिगतेन ज्ञानलवेनेदं कार्यं कर्तुं शक्तोऽहमभवं ते श्रीद्मद्गुरुवराणां पूज्यपादाः सर्वदा मनसि निवसन्त्विति तान् सादरं स्मृत्वा मुद्रणाय प्रवर्तयित्रे श्रेष्ठिजयकृष्णदासगुप्तमहोदयायाऽऽशीर्भिरभिनन्द्य पुस्तकादिप्रदानसाहाय्यं कुर्वद्भ्यः सुहृद्वरेभ्यः श्रीबटुकनाथशर्म एम्० ए०, खिस्तेश्रीनारायणशास्त्रि,-भारद्वाजश्रीगङ्गाधरशास्त्रि, वेतालश्रीअनन्तरामशास्त्रिभ्यः सस्नेहं शतशो धन्यवादान् प्रदाय विरम्यते वृथापल्लवितादमुष्माल्लेखात् । आशास्यते च गुणैकपक्षपातिनो विद्वांसो मां वर्धयिष्यन्त्याशीर्भिरिति शिवम् ।

काशी,
रथयात्रा सं० १९८८

विदुषामनुचरः-
**होशिङ्गजगन्नाथशास्त्री ।**

---

सूचना—पुस्तकस्य ७८ पृष्ठे २७ पंक्तौ पठ्यताम्—
छिन्नाधवल्लीनिहताङ्गजन्मभल्लीनिबद्धोरुचीनिकामम् ।

* श्रीः *

# प्रकरणसूची।


| विषयाः | | | पृष्ठानि |
|---|---|---|---|
| १ छन्दःसिद्धिप्रतानः— | | | (१—२८) |
| १ | स्तबकः | अनुष्टुपूशासनम् | १—४ |
| २ | ,, | छन्दोऽभ्यासः | ५—१४ |
| ३ | ,, | सामान्यशब्दाः | १४—१९ |
| ४ | ,, | वादः | २०—२४ |
| ५ | ,, | वर्ण्यस्थितिः | २४—२८ |
| २ शब्दसिद्धिप्रतानः— | | | (२८—४७) |
| १ | स्तबकः | रूढयौगिकमिश्राख्यः | २८—३३ |
| २ | ,, | यौगिकनाममालाख्यः | ३३—३६ |
| ३ | ,, | अनुप्रासाख्यः | ३६—४३ |
| ४ | ,, | लाक्षणिकाख्यः | ४३—४७ |
| ३ श्लेषसिद्धिप्रतानः— | | | (४८—१०५) |
| १ | स्तबकः | श्लेषव्युत्पादनम् | ४८—६२ |
| २ | ,, | सर्ववर्णनम् | ६२—६७ |
| ३ | ,, | उद्दिष्टवर्णनम् | ६७—७६ |
| ४ | ,, | अद्भुतविधिः | ७६—८५ |
| ५ | ,, | चित्रप्रपञ्चः | ८५—१०५ |
| ४ अर्थसिद्धिप्रतानः— | | | (१०५—१५४) |
| १ | स्तबकः | अलङ्काराभ्यासः | १०५—११६ |
| २ | ,, | वर्ण्यार्थोत्पत्तिः | ११६—१२३ |
| ३ | ,, | आकारार्थोत्पत्तिः | १२३—१२८ |
| ४ | ,, | क्रियार्थोत्पत्तिः | १२८—१३० |
| ५ | ,, | प्रकीर्णकः | १३१—१४३ |
| ६ | ,, | संख्याख्यः | १४३—१४८ |
| ७ | ,, | समस्याक्रमः | १४८—१५ |

कविकल्पलताग्रन्थः प्रस्तुतग्रन्थादनन्तरं निर्माणपदवीमागत इति तत्त्वविदः । प्रस्तुतग्रन्थे अनुष्टुभः शासने पश्चात्तरोदाहरणे 'कुमारपाल भूपाल' इति पद्येन त्रयोदशशताब्दीकस्य कुमारपालनाम्नो नृपालस्यापि समुल्लेखात् स एव कालः समागच्छति । तथाच चतुर्दशशताब्द्याः पूर्वं त्रयोदशशताब्दी विक्रमीया सूत्रवृत्तिकृतोः समय इति निर्विवादम् ।

**प्रस्तुतपुस्तकस्यादर्शः**—एतस्य पुस्तकस्य पूर्वं वारद्वयं मुद्रणमभूत प्रथमं तावदस्मद्गुरुवरमहामहोपाध्यायश्रीदरामशास्त्रितैलङ्गसंशोधितं काश्यां १८८६ ईशवीयवत्सरे प्रकाशितं, द्वितीयं पण्डितवामनशास्त्रि–इसलामपुरकर-महाशयैः सानुवादं संशोधितं मोहमय्यां १८९१ ईशवीयेऽब्दे प्रकाशितम् । तत्र महाराष्ट्रभाषानुवादमयं सवृत्तिसूत्रं द्वितीयं पुस्तकं नास्माकमादर्शोपयोगि, यतस्तत्र केवलमनुवादो न मूलग्रन्थः, परं तान्येव संस्कृतोदाहरणानि तथैव न्यस्तानि । अपिचैतत्पुस्तकं भूमिकालेखनसमयेऽस्माकं दृष्टिगोचरतामुपगतम् । प्रथमं पुतस्कमेवाऽस्माकमादर्शत्वेन पुरो वर्तते । वस्तुतस्तदेवाऽऽदर्शपुस्तकमादाय प्रवृत्तमस्माभिरेतन्मुद्रणाय । मुद्रणारम्भे नातिशुद्धमपूर्णं चैकं हस्तलिखितं पुस्तकमस्माभिः सुहृद्वरभारद्वाजश्रीगङ्गाधरशास्त्रिणां तत एवोपलब्धं ख० सङ्केतेन व्यवहृतम् ।

**उपसंहारः**—इत्थं पुस्तकद्वयमवलम्ब्यापि मुद्रितपुस्तकमात्रसाहाय्येन संशोधनं कृतम । संशोधनकर्मणि गृहीतभारेणापि मया कार्यान्तरव्यग्रतया मतिमान्द्येन वा यदशुद्ध्यादि कचिद् दूरीकर्तुं नाशक्यत, तत्राध्यापका अध्येतारश्च मां क्षन्तुमर्हन्ति । भूमिका–प्रकरणसूची–विषयसूची–कारिकानुक्रमणि-कोदाहरणपद्यसूची–शुद्धिपत्रादिभिः पुस्तकसंस्करणरूपेण मदीयेन व्यापारेण यदि केषाञ्चिदपि कश्चिदप्युपकारः स्यात्तर्हि सफलपरिश्रममात्मानं मन्येय । यत्प्रसादादधिगतेन ज्ञानलवेनेदं कार्यं कर्तुं शक्तोऽहमभवं ते श्रीदमद्गुरुवराणां पूज्यपादाः सर्वदा मनसि निवसन्त्विति तान् सादरं स्मृत्वा मुद्रणाय प्रवर्तयित्रे श्रेष्ठिजयकृष्णदासगुप्तमहोदयायाऽऽशीर्भिरभिनन्द्य पुस्तकादिप्रदानसाहाय्यं कुर्वद्भ्यः सुहृद्वरेभ्यः श्रीबटुकनाथशर्म एम्० ए०, खिस्तेश्रीनारायणशास्त्रि,–भारद्वाजश्रीगङ्गाधरशास्त्रि, वेतालश्रीअनन्तरामशास्त्रिभ्यः सस्नेहं शतशो धन्यवादान् प्रदाय विरम्यते वृथापल्लवितादमुष्माल्लेखात् । आशास्यते च गुणैकपक्षपातिनो विद्वांसो मां वर्धयिष्यन्त्याशीर्भिरिति शिवम् ।

काशी,
रथयात्रा सं० १९८८

विदुषामनुचरः-
**होशिङ्गजगन्नाथशास्त्री ।**

---

सूचना—पुस्तकस्य ७८ पृष्ठे २७ पंक्तौ पठ्यताम्—
छिन्नावल्लीनिहताङ्गजन्मभल्लीनिबद्धोरुचीनिकामम् ।

* श्रीः *

# प्रकरणसूची ।


| विषयाः | | | पृष्ठानि |
|---|---|---|---|
| १ छन्दःसिद्धिप्रतानः— | | | (१—२८) |
| १ | स्तबकः | अनुष्टुपूशासनम् | १—४ |
| २ | ,, | छन्दोऽभ्यासः | ५—१४ |
| ३ | ,, | सामान्यशब्दाः | १४—१९ |
| ४ | ,, | वादः | २०—२४ |
| ५ | ,, | वर्ण्यस्थितिः | २४—२८ |
| २ शब्दसिद्धिप्रतानः— | | | (२८—४७) |
| १ | स्तबकः | रूढयौगिकमिश्राख्यः | २८—३३ |
| २ | ,, | यौगिकनाममालाख्यः | ३३—३६ |
| ३ | ,, | अनुप्रासाख्यः | ३६—४३ |
| ४ | ,, | लाक्षणिकाख्यः | ४३—४७ |
| ३ श्लेषसिद्धिप्रतानः— | | | (४८—१०५) |
| १ | स्तबकः | श्लेषव्युत्पादनम् | ४८—६२ |
| २ | ,, | सर्ववर्णनम् | ६२—६७ |
| ३ | ,, | उद्दिष्टवर्णनम् | ६७—७६ |
| ४ | ,, | अद्भुतविधिः | ७६—८५ |
| ५ | ,, | चित्रप्रपञ्चः | ८५—१०५ |
| ४ अर्थसिद्धिप्रतानः— | | | (१०५—१५४) |
| १ | स्तबकः | अलङ्काराभ्यासः | १०५—११६ |
| २ | ,, | वर्ण्यार्थोत्पत्तिः | ११६—१२३ |
| ३ | ,, | आकारार्थोत्पत्तिः | १२३—१२८ |
| ४ | ,, | क्रियार्थोत्पत्तिः | १२९—१३० |
| ५ | ,, | प्रकीर्णकः | १३१—१४३ |
| ६ | ,, | संख्याख्यः | १४३—१४८ |
| ७ | ,, | समस्याक्रमः | १४८—१५४ |

* श्रीः *

# * विषयसूची *

## प्रथमप्रतानस्य

विषयाः— पृ०


प्रथमे स्तवके—

सूत्रव्याख्याकृतोर्मङ्गलाचरणानुबन्धचतुष्टयप्रतिपादनम्। १

कविताशास्त्रस्य सभेदं प्रकरणोल्लेखः। १

प्रतानरूपप्रकरणस्य भेदानां स्तबकानां नामकरणम्। १—२

छन्दःसिद्धिप्रताने प्रथमेऽनुष्टुप्छन्दःसने एकाक्षरादिसाध्य-पदस्थापनं, गुरुलघुविचारो, विशेषणैः पूर्तिकरणं च। २

अनुष्टुप्छन्दसः पथ्यावक्त्रादीनां नियमाः, प्रस्तारविधिः, गुरुलघुस्वरूपनिरूपणं च। ३

क्वचिल्लघोर्गुरुत्वादिनियमः। ३

वर्णनीयस्यार्थस्य वर्णादिना सविशेषणत्वं, समार्थकैर्बन्ध्वा-दिशब्दैर्वर्णनं, श्रोलदमीत्यादिभिस्तत्संयुक्तैरन्यैश्च पदै-र्वर्णनरूपेण कवितापूर्तिकरणविधिदर्शनम्। ३—४

द्वितीये स्तबके—

ह्रस्वदीर्घस्वरव्यवस्थया एकाक्षरेणाऽनुष्टुबादिछन्दसां निरर्थकाक्षरमात्रसंयोजनेन छन्दोऽभ्यासः। ५

तत्प्रसङ्गेन स्रग्धरान्तानां समवृत्तानां पुष्पिताग्राद्यर्धसम-वृत्तानामार्याछन्दसश्च स्वरूपनिरूपणम्। ५—६

चतुष्कतद्धितादिभिर्लाटानुप्रासादिजैः शब्दभेदजैश्च शब्दैः सोदाहरणं छन्दःसाधनदर्शनम्। ७—९

कथादीनां दृष्टलोकचेष्टादीनां च वर्णनैः छन्दोऽभ्यास-समर्थनम्। ९—१०

स्वेषामन्येषां वा पद्यानां तस्मिन्नेवार्थे तत्रैव छन्दसि छन्दो-न्तरेषु वा परिवर्तनम्। १०—११

छन्दःसिद्ध्यर्थं छन्दोमर्मज्ञानविधिः। ११

यतिनियमस्तन्नियोजनप्रकारश्च सोदाहरणः। १२—१४

तृतीये स्तबके—

छन्दःपूरणायैकाक्षरादीनामनुलोमप्रतिलोमविधया रचनो-पयोगितया छन्दोविशेषे च ग्राह्यानां सामान्यशब्दानां संग्रहः। १४—१९

चतुर्थे स्तबके—

छन्दोबद्ध वादे सानुप्रासोक्त्यादिना कवित्वकरणं, तत्र सानुप्रासोक्तौ सानुप्रासशब्दसंग्रहः, स्वोत्कर्षे प्रशंसार्थं सारसंग्रहः, परनिन्दार्थमुदाहरणसंग्रहश्च। २०—२४

विषयाः— पृ०

पञ्चमे स्तबके—

महाकाव्यादिषु वर्ण्यानां राजादीनां परिगणनं, नृपादिषु वर्ण्यस्य विद्यादेरपि संग्रहः । २४--२७

कविसमयस्य त्रैविध्यं, तत्राऽसतो निबन्धस्य, सतोऽप्य-निबन्धस्य, जात्यादिनियमस्य नियमविशेषाणां च प्रदर्शनम् । २७--२८

## द्वितीयप्रतानस्य

प्रथमे स्तबके—

रूढयौगिकमिश्रभेदेन शब्दानां त्रैविध्यप्रतिपादनम्, तत्र रूढस्य सोदाहरणमुल्लेखः । २८

गुणक्रियासम्बन्धैरर्थानुगमनरूपस्य यौगिकस्य शब्द-जातस्य सोदाहरणपरिवृत्ति प्रपञ्चनम् । २९--३३

मिश्रस्याऽपि सदृष्टान्तमुल्लेखः । ३३

द्वितीये स्तबके—

समासव्यासहेतूनां योगार्हनाम्नां संग्रहः, तत्र सप्तम्यन्त-मुद्देशवचनं, ततो यौगिकोल्लेखः । ३३--३६

तृतीये स्तबके—

अनुप्राससिद्धये तादृशशब्दसंग्रहो वर्णनोपयोगी कृतः, चित्रानुप्रासकरशब्दोन्नयनप्रकारप्रतिपादनं च । ३६—४३

चतुर्थे स्तबके—

अभिधेयलाक्षणिकव्यञ्जकशब्दानां स्वरूपनिर्देशः । ४३

लक्षणाविचारः सोदाहरणं तद्भेदप्रतिपादनं, लक्षणार्ह-शब्दसङ्कलनं, तस्य क्वचिदुपमेये उपमाने चारोपणम् । ४३--४७

## तृतीयप्रतानस्य

प्रथमे स्तबके—

श्लेषव्युत्पादनविधिः, तत्र सभङ्गाऽभङ्गभेदस्तदुदाहरण-प्रदर्शनम् । ४८

सभङ्गश्लेषे पूर्वाक्षरत्रोटनेन श्लेषसिद्धिः सोदाहरणा दर्शिता, तथैवाऽन्त्याक्षरत्रोटनोपयुक्तशब्दसंग्रहः, नैकविधचातुर्येण श्लेषसाधननिर्देशः, अन्तेच तदुचितशब्दसंग्रहः । ४८--६२

द्वितीये स्तबके--

वर्णनीयस्य वस्तुनो वर्णाकारादिभिः श्लेषद्वारा सर्वविध-वर्णनसाधनप्रकारः तस्योदाहरणद्वारा स्पष्टीकरणं च । ६२--६७

विषयाः— पृ०

तृतीये स्तबके--

श्लेषेणोद्दिष्टवस्तुद्वयस्याऽभेदकरणरूपोद्दिष्टवर्णनस्य षड्विधत्वम्। ६७

सोदाहरणं श्वेतश्याम, रक्तश्वेत, पीतश्वेतरक्तश्याम, पीतश्याम, पीतरक्तानामभेददर्शनम्। ६७--७४

परमादिशब्दैरभेदप्रतिपत्तिः सोदाहरणा। ७४--७६

चतुर्थे स्तबके--

प्रत्ययादिभिर्लिङ्गविभक्तीनामभेदेनाऽद्भुतकरणविधिः सोदाहरणस्तद्विस्तारश्च। ७६--८४

श्लेषभेदस्याऽष्टविधत्वं, तद्भिन्नभेदविचारं, श्लेषेण यमकोपायं वक्रोक्त्यादीनामलङ्काराणामपि श्लेषसाध्यत्वमुदाहरणैः ग्रन्थकारः प्रादर्शयत्। ८४--८५

पञ्चमे स्तबके--

स्वरव्यञ्जनादिनियन्त्रणरूपचित्रकाव्यस्य लक्षणं, च्युतगूढादिरूपस्य चित्रकाव्यस्य चातुर्विध्यं च। ८५

व्यञ्जनचित्रोदाहरणं तद्व्याख्या, तत्साधकैकाक्षरादिशब्दसंग्रहः। ८६--८७

एकार्थनानार्थैकवर्णादीनां नाम्नामव्ययानां चाऽर्थप्रतिपादककोशाकारशब्दसंग्रहः। ८७--९२

एकाक्षरादिधातूनां सार्थानां संग्रहः। ९२--९४

द्व्यक्षरचित्रकाव्योदाहरणं तत्साधककतिपयशब्दसंग्रहः। ९४--९६

स्थानचित्रं दन्त्यस्थानादि सोदाहरणं प्रदर्श्य गतिचित्रेषु गोमूत्रिकातुरगपदपादगतप्रत्यागतानामुदाहरणानि दर्शितानि, ततोऽनुलोमप्रतिलोमशब्दसंग्रहश्च। ९६--१००

आकारचित्रेषु खड्गबन्धाऽष्टदलद्व्याऽष्टारचक्रषोडशदलकमलबन्धान् प्रदर्श्य चतुर्विधच्युतस्य चतुर्विधगूढस्यापि सोदाहरणस्य प्रपञ्चनं विधाय द्वात्रिंशत्कोष्ठकेषु श्लोककरणविधिरुपदर्शितः। १००---१०५

## चतुर्थप्रतानस्य

प्रथमे स्तबके--

उपमालक्षणं, तद्भेदाः सोदाहरणाः, वाचकोपमानधर्माणां प्रपञ्चनम्, एकस्य बहुधोपमानत्वं च। १०५-१०७

विभक्त्यादिविपर्ययादपि काव्यकरणम्, तोष्यादिभेदभिन्नत्वं चोपमायाः। १०७-१०८

विषयाः— पृ०

उपमासिद्धयै तद्गतभेदज्ञानसम्पत्त्याऽलङ्कारान्तराभ्यासः, उत्प्रेक्षावाचकाः शब्दाश्च । १०९

रूपकालङ्कारप्रपञ्चः सभेदोदाहरणः । १०९-११२

राजादिष्वारोपार्हाणां गुणानां, दोषाणां च भेद्यादिरूपेण रूपकालङ्कारस्य सोदाहरणं सिद्धिः । ११३-११६

द्वितीये स्तवके--

अर्थोत्पत्तिं प्रति वर्णाकारादीनां हेतुत्वप्रतिपादनम्, वर्णादिषु व्यस्तैः समस्तैर्वा पूरणम् । ११६-११७

वर्णादिभिः सदृशे वस्तुनि सदृशवस्तुभावानालङ्कारैर्योजनम् । ११७

वर्णादीनां गुणानां सादृश्यादिनोपमेये रोपणम् । ११७

अर्थोत्पत्तये शुक्लकृष्णनीलरक्तपिङ्गलधूसरपदार्थोपसंग्रहः, तदुदाहरणानि च । ११७-१२३

तृतीये स्तवके--

आकारेभ्योऽर्थोत्पत्तये चतुरस्राकारादिपदार्थसंग्रहः सोदाहरणः । १२३-१२८

चतुर्थे स्तवके--

क्रियातोऽर्थोत्पत्तिकथनं प्रकारान्तरश्च । १२८-१३०

पञ्चमे स्तवके--

आधारपरिवारादितोऽर्थोत्पत्तये वर्ण्यजितस्य वस्तुमात्रस्य नैकविधं योजनम्, उदाहरणैः स्पष्टीकरणं च । १३१-१३८

सदृशपदार्थानामप्यर्थोत्पत्तिं प्रति कारणतया वर्णाकारादिभ्योऽनन्तरं प्रकीर्णकसदृशवस्तुसंग्रहः । १३८-१४३

षष्ठे स्तवके--

एकादिसंख्याभिर्निबद्धाभिरर्थपुष्टीकरणविधिः सोदाहरणं प्रपञ्चितः । १४३-१४८

सप्तमे स्तवके--

समस्यापूरणादावसम्भवत्समस्यापूर्तये कल्पादिकल्पान्तवस्तुप्रतिपादनादिद्वारा लघूनां गुरुत्वस्य गुरूणां च लघुत्वस्य करणम् । १४८-१४९

जगत्त्रयपदार्थस्य कयापि विधया वैपरीत्यसम्पादनं, तदुदाहरणानि च । १४९-१५१

यदिशब्देन वात्सल्यादिना स्वप्नादिना च समस्यापूर्तिकरणं सोदाहरणम् । १५१-१५३

एकैकस्मिन् भुवने भुवनान्तराणामवतारणविधिः सोदाहरणः, गुणाधिकत्वकल्पनं च । १५३-१५४

टीकाकृतः सपरिचयं ग्रन्थसमाप्तिसूचनम् । १५४

# काशीस्थराजकीयसंस्कृतपाठशालीयपरीक्षासु

## साहित्यशास्त्रिपरीक्षायाम्

### ३ खण्डे २ पत्रे

## काव्यकल्पलतावृत्तौ प्रश्नाः ।

१९२५

१ वादेऽनुप्रासयुक्तोक्तिः स्वोत्कर्षः परगर्हणा ।
कुलशाखादिसंप्रश्नः स्वशाखाध्ययनप्रथा ॥
इयं कारिका व्याख्येया । अनुप्रासयुक्तोक्त्यादीनां पदार्थानामुदाहरणानि च लेख्यानि । ८

२ वर्णाकारक्रियामुख्यैः सदृशं वस्तु वस्तुनि ।
संयोजयेद्यथौचित्यमुपमारूपकादिभिः ॥
इमां कारिकां विस्पष्टतया व्याख्याय सदृशवस्तुयोजनरीतिं प्रदर्शयत । ७

१९२६

१ छन्दःसिद्धिप्रतानस्य कति स्तबकाः ? तेषु च प्रत्येकं प्रतिपादितार्थस्य समासतो निरूपणपुरःसरं छन्दःसिद्धिप्रकार उदाहरणमुखेन प्रदर्श्यताम् । १५

१९२७

१ न्युपसर्गशब्दपृष्ठगराजीतुल्यैर्विशेषणक्षिप्तैः ।
अन्ते क्रियाविशेषणसारैः काव्यं महाऽद्भुतं भवति ॥
इमां कारिकां सम्यग् व्याख्याय तथाविधं महाऽद्भुतं काव्यमुदाहरणमुखेन प्रदर्शनीयं, सङ्गमनीयं च तत्रोपरिष्टात् प्रदर्शितं लक्षणम् । १२

१९२८

१ यतिभङ्गो नाम कीदृशः, कदाऽसौ दोषतां वहति कदा नेति सोदाहरणं प्रदर्शय ।

१९२९

१ गुरु स्याल्लघु पादान्ते कदाचिल्लघु वा गुरु ।
उदाहरणजातैस्तद् द्वयं सौम्य निरूपय ॥ ८

१९३०

१ वसन्तविषये ख्यातिः कवीनामस्ति कीदृशी ।
वसन्ततिलके वृत्ते मधुरं निबधान ताम् ॥ ८

२ श्लेषसाधनसम्पत्तिं काव्यकल्पलतोदिताम् ॥
गद्ये हरिहरश्लेषविधया सम्प्रदर्शय ॥ १०

१९३१

१ वर्णादिभिर्विभिन्नस्योद्दिष्टं वस्तुद्वयस्य यत् ।
अभेदः क्रियते श्लेषात्तत्स्यादुद्दिष्टवर्णनम् ॥
उदाहरणप्रदर्शनपूर्वकमियं कारिका व्याख्येया । ८

॥ श्रीः ॥

श्रीमदरिसिंहनिर्मितसूत्रसहिता

श्रीमदमरचन्द्रविरचिता

# काव्यकल्पलतावृत्तिः।

विमृश्य वाङ्मयं ज्योतिरमरेण यतीन्दुना ।
काव्यकल्पलताख्येयं कविशिक्षा प्रतन्यते ॥ १ ॥

सारस्वतामृतमहार्णवपूर्णिमेन्दोर्मत्वाऽरिसिंहसुकवेः कवितारहस्यम् ।
किंचिच्च तद्रचितमात्मकृतं च किंचिद्व्याख्यास्यते त्वरितकाव्यकृतेऽत्र सूत्रम् ॥

शास्त्रारम्भे(१) शास्त्रकारः समुचितेष्टदेवतानमस्कारपूर्वं शास्त्रस्याख्यां प्रेक्षावत्प्रवृत्त्यङ्गप्रयोजनमुक्तमभिधेयं चाह—

वाचं नत्वा महानन्दकरसत्काव्यसम्पदे ।
कविशिक्षामिमां वच्मि काव्यकल्पलताह्वयाम् ॥ १ ॥

वाचं नत्वेति श्रेयोहेतुः; श्रेयसा ह्यविघ्नेन शास्त्रसमाप्तिर्भवति, महानन्दकरं यत्सत्काव्यं तस्य या सम्पद् वृद्धिस्तदर्थम् , सद्यो रसास्वादजन्मा विगलितवेद्यान्तरा परब्रह्मरसास्वादसोदरा परप्रीतिर्महानन्दः, इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम् । कल्पलताऽपि सङ्कल्पमात्रलभ्यत्वेन महानन्दकरी सत्काव्या सद्भिर्वर्ण्या या सम्पत् तदर्थं स्यात्। महानन्दः प्रयोजनं, तद्युक्तं सत्काव्यमभिधेयं, शास्त्रमभिधायकं, तयोरभिधानाभिधेयलक्षणः सम्बन्धः । शेषं सुगमम् ।

शास्त्रसङ्ग्रहमाह—

चत्वारोऽत्र च्छन्दःशब्दश्लेषार्थसिद्धिनामानः ।
क्रमशस्तताः प्रतानाः पञ्चचतुष्पञ्चसप्तभिः स्तबकैः ॥ २ ॥

सिद्धिशब्दः प्रत्येकं योज्यः, स्तबकसंख्या यथासंख्यम् । अत्र काव्यकल्पलतायां छन्दःसिद्धिप्रतानः पञ्चभिः स्तबकैः, शब्दसिद्धिप्रतानश्चतुर्भिः स्तबकैः, श्लेषसिद्धिप्रतानः पञ्चभिः स्तबकैः, अर्थसिद्धिप्रतानः सप्तभिः स्तबकैः इत्येते तता विस्तीर्णाः । लताधर्मत्वात् प्रतानस्तबकारोपः ।

क्रमेण स्तबकानां नामान्याह—

अनुष्टुप्छासनं छन्दोऽभ्यासः सामान्यशब्दकः ।
वादो वर्ण्यस्थितिः पूर्वप्रताने स्तबका मताः ॥ ३ ॥

(१) इदं ख० पुस्तकेऽधिकम् ।

रूढयौगिकमिश्राख्या यौगिकाह्वानमालिका ।
अनुप्रासो लाक्षणिको द्वितीये स्तबकाः स्मृताः ॥ ४ ॥
श्लेषव्युत्पादनं सर्ववर्णनोद्दिष्टवर्णने ।
अद्भुतं चित्रमित्येते तृतीये स्तबकाः कृताः ॥ ५ ॥
तुर्ये पुनरलङ्काराभ्यासवर्ण्याकृतिक्रियाः ।
प्रकीर्णकाभिधः संख्यासमस्ये स्तबकाः स्थिताः ॥ ६ ॥

इति शास्त्रसंग्रहः ।

काव्यस्य छन्दोमूलत्वात् प्रथमं छन्दःसिद्धिप्रतानः, तत्र पूर्वमनुष्टुप्छासनं यथा—

आदौ साध्यपदं स्थाप्यम्

आदौ प्रथमं साध्यमवश्यं प्रयोज्यं पदं कार्यम् । एकाक्षरादीनि साध्यपदानि यथा—श्रीः, लक्ष्मीः, कमला, कमलजा, जलधिजा, दुग्धाब्धिपुत्री, दुग्धाब्धितनया, दुग्धाम्भोनिधिसम्भूता ।

एकादिद्विलघु द्व्यात् ।

एको ह्रस्वो दीर्घो वा वर्ण आदौ ययोस्तौ एकादी, द्वौ लघू यत्र पदे तदेकादिद्विलघु पदं जलधिजा-वारिधिजादि द्व्याद्वर्णद्व्यात् स्थाप्यम् । यथा—असौ जलधिजा देवी, इयं वारिधिजा देवी ।

ह्रस्वादिद्विलघुपदस्यादौ लघू गुरुलघू च न प्रयोज्यौ । यथा—इह जलधिजा देवी, अत्र जलधिजा देवी ।

पञ्चाक्षरं समासे के विभक्तिभ्रंशिनि स्वरे ॥ ७ ॥

पञ्चाक्षरं पदं कुमारपाल-क्षीराब्धिपुत्रीप्रभृतिपदं समासेन कप्रत्ययेन वा विभक्तिभ्रंशहेतुना पुरःस्थस्वरेण वा स्थाप्यम् । यथा—कुमारपाल भूपाल, क्षीराब्धिपुत्रिका सेयम्, कुमारपालको राजा, कुमारपाल उल्लासी ।

स्याच्चतुष्पञ्चषड्ह्रस्वं प्रान्ते विषमपादयोः ।

चतुर्ह्रस्वाक्षरं पदं दशरथादिकं पञ्चह्रस्वाक्षरं पदं कमलवनादिकं षड्ह्रस्वाक्षरं पदं समवसरणादिकं प्रथमतृतीयपादयोः प्रान्ते चतुस्त्रिद्विवर्णेभ्यः प्रायः सर्वगुरुभ्यो निश्चितान्तगुरुभ्यो वा परतः प्रयोज्यम् । यथा—पृथ्वीनाथो दशरथः, अथवा— तदा नृपो दशरथः, विस्मेरं कमलवनं, रम्यं समवसरणम् ।

शेषं विशेषणैः पूर्णम्

शेषं काव्यं विशेषणैः पूर्णं क्रियते ।

तूर्णं काव्यप्रदं पदम् ॥ ८ ॥

इत्युक्तप्रकारेण प्रयुज्यमानं पदं शीघ्रं काव्यप्रदं भवति । अनुष्टुभि प्रायः पथ्यावक्त्रेणाऽभ्यासः क्रियते ।

अनुष्टुभि सनौ नाद्यात् तुर्यात्स्याद्योऽक्षराद्यक्त्रम् ।
पथ्यावक्त्रं भवेत् तुर्याद्वर्णाज्जे युग्मपादयोः ॥ ९ ॥
ऊजे तुर्यान्नयभरमसैर्नैर्विपुलादयः ।
आस्वोजे प्रायस्तुर्यो गुर्युजि षड्भ्यो लघुर्ध्रुवः ॥ १० ॥
वर्णमात्राभिधं द्वेधा छन्दः पद्यं चतुष्पदी ।
मयौ रसौ तजौ भनौ स्युरष्टौ वर्णगणास्त्रिकाः ॥ ११ ॥
मस्त्रिगुरुर्यो मुखलो मध्यलघू रस्तथान्त्यगुरुभाक् सः ।
तोऽन्तलघुर्जो मध्यगुरादिगुरुर्भश्च नस्त्रिलघुः ॥ १२ ॥
नाम्ना दतचपषा द्वित्रिचतुष्पञ्चषट्कलाः ।
मात्रागणाः स्युर्भेदद्वित्रिपञ्चाष्टत्रयोदशैः ॥ १३ ॥
पूर्वं सर्वगुरोः पादाल्लघुराद्यगुरोरधः ।
अग्र्यं तूपरिवद्भूयो लघुराद्यगुरोरधः ॥ १४ ॥
आदौ स्युर्गुरवो यावत् पादः सर्वलघुर्भवेत् ।
प्रस्तारः कथितो वर्णच्छन्दसामिति कोविदैः ॥ १५ ॥
आद्याद्गुरोरधो ह्रस्वमग्र्यं तूपरिवल्लिखेत् ।
आदौ लघुं गुरुं तूने मात्राजातिषु सम्भवेत् ॥ १६ ॥
एकमात्र ऋजुर्ह्रस्वो लघुर्ज्ञेयो गुरुः पुनः ।
ग्वक्रो दीर्घो विसर्गान्तः सानुस्वारो द्विमात्रकः ॥ १७ ॥
अह्रादिसंयुते वर्णे व्यञ्जने चाग्रगे ल् गुरुः ।
पादान्ते वा लघोर्गत्वं वंशस्थादिषु नो पुनः ॥ १८ ॥

अह्रादि यथा—

तव ह्रियाऽपह्रियो मम ह्रीरभूच्छशिग्रहेऽपि द्रुतं न धृता ततः ।
बहुलभ्रामरमेचकतामसं मम प्रिये क्व समेष्यति तत्पुनः ॥

तीव्रप्रयत्नोच्चारेण ह्रादावपि लघुर्गुरुः ।
बर्हभारेषु केशान्वा स्नुतमीन इव ह्रदः ॥ १९ ॥

विशेषेणोपायमाह—

विशिष्टार्थो वर्णाऽऽकाराऽऽधाराऽऽधेयक्रियादिभिः ।

वर्ण्यः पदार्थो वर्णेन, आकारेण, आधारेण, आधेयेन, क्रियया आदिशब्दात् परिवारादिभिः सविशेषणः क्रियते । यथा—

पूर्णिमेन्दुः सितच्छायः सद्वृत्तोऽम्बरभूषणम् ।
कलाकलापकलितो नयनानन्दनो बभौ ॥

तथा तुल्यश्रिया चारुर्बन्धुश्चौरो रिपुः सुहृत् ॥ २० ॥

तथा वर्ण्योऽर्थो वर्णादिभिस्तुल्यानां सदृशपदार्थानां शोभया चारुर्बन्धुश्चौरो वा

शत्रुर्वा मित्रं वा भणनीयः । यथा—

भवद्यशोभरो भाति स्मेरकुन्देन्दुसुन्दरः ।
हारतारकमन्दारकैलासोदरसोदरः ।।
कर्पूरपूररुक्चौरः शरदभ्रप्रभारिपुः ।
ऐरावततुषाराद्रिशेषमित्रं क्षमापते ।।

पुनर्विशेषेणोपायान्तरमाह—

गुणात् श्रिया युतभ्राजिरोचिष्णुद्योतितादयः ।

गुणाद्वर्ण्यवर्णादेः परतः श्रीशब्दस्तथैतदुपलक्षणात् लक्ष्मीच्छायाशोभाकलाकान्तिभावप्रत्ययादयः कार्याः, ततस्तत्परतः समासेन युतार्था भ्राजिष्णुरोचिष्णुद्योतितार्थादयश्च । क्वापि श्रीप्रभृतिशब्दान् विनापि केवलगुणादेव परतस्तथा, क्वचिदसमासेनापि युतार्थादयो योज्याः । यथा-

शोणश्रीसंयुतो भानुर्वृत्तलक्ष्मीसमन्वितः ।
अंशूनां शोभया कीर्णो गगनस्थितिसङ्गतः ।।
श्यामलद्युतिविभ्राजी गर्जिरोचिष्णुवैभवः ।
विद्युता द्योतितः प्रीतिं स्तनयित्नुस्तनोत्ययम् ।।

तुल्यादमी सदृग्जिष्णुमुख्याः पूर्वं जितादयः ।। २१ ।।

तुल्याद्वर्ण्यस्य वर्णादिभिः समानात् परतोऽमी पूर्वोक्तरीत्या युतार्थाद्यास्तथा सदृगर्थाश्च जिष्णुजैत्रजयिजित्वरजितमुख्याश्च तथैतदुपलक्षणात् स्पर्द्धिधिक्कारिनिर्भर्त्सकविडम्बनतर्जकादयो योज्याः, तथा तुल्यात्पूर्वं जित-भर्त्सित-विडम्बित-धिक्कृत-न्यक्कृत-निकृत-पराभूत-अवहेलित-अवगणित-अवमानित-तिरस्कृत-अधःकृत-तर्जितादयो योज्याः । यथा—

चण्डश्रीसंयुता कीर्तिः कर्पूरभ्राजिवैभवा ।
यस्य गङ्गोर्मिरोचिष्णुः कुन्दश्रीद्योतिता बभौ ।।
कैलाससदृशं रेजे विष्णुशङ्खांशुजिष्णुभम् ।
यद्यशो विधुधिक्कारि तुषाराद्रिविडम्बनम् ।।
जितपार्वणशीतांशु पराभूतभवाचलम् ।
निर्भर्त्सिततुषाराद्रि भाति भूप भवद्यशः ।।

इति श्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रविरचितायां काव्यकल्पलताकविशिक्षावृत्तौ छन्दःसिद्धिप्रताने प्रथमेऽनुष्टुप्शासनः स्तबकः प्रथमः ।।

## अथ छन्दोऽभ्यासविधिः ।

अआ इई उऊ अंअः ह्रस्वदीर्घव्यवस्थया ।
काव्येकव्यञ्जनोक्तेन छन्दसां परिपाटिका ।। २२ ।।

अआ प्रथमे पादे, इई द्वितीये पादे, उऊ तृतीये पादे, अनुस्वाराकारौ चतुर्थे पादे लघुस्थाने ह्रस्वो गुरुस्थाने दीर्घ इत्यनया व्यवस्थया ककारादिहकारान्तानां मध्यादेकव्यञ्जनोच्चारितेन पद्येन पुनः पुनः परिवर्तनं क्रियते । एकाक्षरादि सप्ताक्षरान्तं छन्दः कविभिर्बाहुल्येनाऽप्रयुक्तत्वान्नात्र लिखितम् । अष्टाक्षरं विषमवृत्तं पथ्यावक्त्रं यथा—

का का का का क का का का की की की की कि की कि की ।
कू कू कू कू कु कू कू कू कं कं कं कं क कं क कम् ।।

एवं सर्वत्र व्यञ्जनैः ।

नवाक्षरम्—रो नरौ भवति भद्रिका । रेण जेन रेण कामिनी ।

दशाक्षरम्—वेदैर्मत्ता मभसगयुक्ता । माल्यो गो यदि पणवो बाणैः ।

एकादशाक्षरम्—स्यादिन्द्रवज्रा ततजा गुरू चेत् ।

का का क का का क क का क का का की की कि की की कि कि की कि की की ।
कू कू कु कू कू कु कु कू कु कू कू कं कं क कं कं क क कं क कं कम् ।।

एवं सर्वत्र छन्दःसु ज्ञेयम् । उपेन्द्रवज्रा जतजा गयुग्मम् । इन्द्रवज्रोपेन्द्रवज्रयोरन्योन्याङ्घ्रिमेलनमुपजातिर्भवेत्, इन्द्रवंशावंशस्थयोरपि । रान्नरौ लघुगुरू रथोद्धता । स्वागता तु रनभाद् गुरुयुग्मम् । वेदैश्छिन्ना शालिनी मस्ततो गौ । उत्थापिनीतजभला गयुता । तानां त्रयं गो लयग्राहिसंज्ञम् । दोधकमुक्तमिदं भभभाद्गौ । सससा लगुरू विदुषी मता । तो जौ लगुरू यदि मोटनकम् । म्भौ न्लौ वेदैर्भ्रमरविलसितम् ।

द्वादशाक्षरम्—ख्यातेन्द्रवंशा ततजैरसंयुतैः । वदन्ति वंशस्थमिदं जतौ जरौ । द्रुतविलम्बितमत्र नभौ भरौ । इह तोटकमम्बुधिसैः प्रथितम् । चतुर्भिर्यकारैर्भुजङ्गप्रयातम् । सम्मता स्रग्विणी रैश्चतुर्भिर्युता । त्भौ ज्रौ यदा तु ललिता भवेत्तदा । प्रमिताक्षरा सगणतो जससैः । परिकीर्तितं केकिरवं सयौ स्यौ ।

त्रयोदशाक्षरम्—त्रिश्छेदा मनजरगैः प्रहर्षिणीयम् । जतौ ससौ गो भवति मञ्जुभाषिणी । सजसा जगौ यदि तदा तु नन्दिनी । सजसा सगौ यदि तदा कुटजं स्यात् । गदितं सुदन्तं सयसा जगौ यदा ।

चतुर्दशाक्षरम्—ख्याता वसन्ततिलका तभजा जगौ गः । अश्वैर्लक्ष्मीर्मतेयं म्रौ ततौ गद्वयञ्चेत् ।

पञ्चदशाक्षरम्—वसुयतिरियमुक्ता मालिनी नौ मयौ यः ।

सप्तदशाक्षरम्—गुहास्यैर्विश्रान्तिर्यमनसभला गः शिखरिणी । यतिर्वसुकृता जसौ जसयलाश्च पृथ्वी गुरुः । मन्दाक्रान्ता मभनततगा गो यतिर्वेदषड्भिः । नसमरसला गः षड्वेदैर्यतौ हरिणी मता ।

एकोनविंशत्यक्षरम्—आदित्यैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ।

एकविंशत्यक्षरम्—विज्ञेया स्रग्धराऽसौ मरभनययया वाहवाहैर्यतिश्चेत् ।

अर्द्धसमम्—अयुजि ननरजा भवन्ति पादे युजि च नजौ जरगाश्च पुष्पिताग्रा । विषमे ससजा गुरू समे स्युः सभरा यौ यदि मालभारिणी सा । एतावौपच्छन्दसिकभेदौ । विषमे ससजा गुरुः समे सभरा लगौ तु तदा प्रबोधिता, अयं वैतालीयभेदः ।

अथ आर्यालक्षणम्—

यस्यां सप्तचतुष्कलगणा गुरुश्च जगणो न विषमे स्यात् ।
जः षष्ठोऽर्थ नलघुकौ पूर्वार्द्धे जगुरिमामार्याम् ।। २३ ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च यदिह पदघटना ।
अपरार्धे पञ्चमके मुखलादिह भवति षष्ठो लः ।। २४ ।।

अन्यत् आर्याछन्दो मत्कृतच्छन्दोरत्नावल्यां ज्ञेयमिति । पुनश्छन्दोऽभ्यासोपायमाह—

चतुष्कतद्धिताख्यातकृत्स्यादित्यादिसम्भवैः ।
कर्तृकर्मादिसित्यादिविभक्त्युत्थविशेषजैः ।। २५ ।।
समाससंश्रितैर्नाममालोत्थैर्यौगिकैरपि ।
निरर्थैरर्थसंयुक्तैर्लाटानुप्राससंयुतैः ।। २६ ।।
षड्भाषासम्भवैः शब्दैरभ्यसेच्छन्दभेदजैः ।

शब्दैरिति सर्वत्र सम्बन्धनीयम् । चतुष्कशब्दैर्यथा—

दण्डाग्रं सा गता नारी दधीदं हि नदीयते ।
मधूदकं वधूढा सा तवेहा सेयमङ्गना ।।

तद्धितशब्दैर्यथा—

इदानीमधुना सद्यः कुत्र यत्र यथा तथा ।
सर्वथा सर्वदा धीमान् बहुधाऽनेकधा कथम् ।।

आख्यातशब्दैर्यथा—

करोति तनुते वेत्ति वक्ति जानाति पृच्छति ।
भुङ्क्ते भक्षयति प्साति स्तौति रौति न वाति च ॥

कृतशब्दैर्यथा—

अलङ्करिष्णुवन्दारुभास्वरस्पृहयालवः ।
संविधाय विधातुं स भेजिवान् कृतवानपि ।।

स्यादिशब्दैर्यथा—

हंसो हंसौ शुभौ हंसा हंसं हंसौ च हंसकान् ।
हंसेन वरहंसाभ्यां हंसैर्हंसाय शोभिने ।।
हंसाभ्यां राजहंसेभ्यो हंसात् हंसस्य हंसयोः ।
हंसानां प्रवरे हंसे हंसयोर्हंसकेष्वपि ।।
बाला बाले वरा बाला बालां बाले मनोरमे ।

बाला बालया बालाभ्यां बालाभिः प्रतिवासरम् ।।
बालायै वरबालाभ्यां बालाभ्यस्तदनन्तरम् ।
बालाया वरबालाभ्यां बालाभ्योऽपि निरन्तरम् ।।
बालाया बालयोर्नित्यं बालानां विभ्रमस्पृशाम् ।
बालायां बालयोरेव बालासु सकलास्वपि ।।

त्यादिशब्दैर्यथा—

करोति कुरुते नित्यं ते कुर्वन्ति करोषि किम् ।
कुरुथः कुरुथ स्पष्टं करोमि वितनोमि च ।।
कुर्वः कुर्मो वयं कार्यं कुरुते कार्यमुत्तमः ।
कुर्वाते कुर्वते देवाः कुरुषे त्वं रुषोज्झितः ।।
कुर्वाथे कुरुध्वे कुर्वे कुर्वहे कुर्महे वयम् ।।

एवं सर्वकालविभक्तिषु । कर्तृकर्मादिशब्दैर्यथा—

कटं करोति दत्तोऽयं तृणैर्दत्ते द्विजाय गाम् ।
वृक्षात्पतन्ति पर्णानि राज्ञो धर्मे दृढा मतिः ।।

स्यादिविभक्तिविशेषजैर्यथा—

प्रविशन्ति पुरे कुन्ता हे शिष्य पठ सर्वदा ।
मातरं मातुरस्मार्षीत मातुरध्येति मातरम् ।।

त्यादिविभक्तिविशेषजैर्यथा—

स्म पुराधीयते तेनेति ह स्म कथयत्यदः ।
वसन्तीह पुरा छात्रा राघवो भाषते तदा ।।
ऊषुरत्र पुरा छात्रा बभाषे राघवस्तदा ।
पुराऽवसन्निह च्छात्रास्तदाऽभाषत राघवः ।।
पुराऽवात्सुरिह च्छात्रास्तदाऽभाषिष्ट राघवः ।
यावद् भुङ्क्ते पुरा भुङ्क्ते पुरा श्वो भुङ्क्त इत्यपि ।।

समाससंश्रितैर्यथा—

नीलोत्पलं जरद्धस्ती केवलान्नं नवोदकम् ।
पञ्चपूली सुखप्राप्तो गोहितं ग्रामनिर्गतः ।।
आरूढवानरो वृक्षः पलाशधवपिप्पलाः ।
पीतच्छत्रोपानहं स्वादुस्कुम्भमधिस्त्रि च ।।

नाममालाशब्दैर्यथा—

धात्री वसुन्धरा भूमिः काननं विपिनं वनम् ।
राजा पृथ्वीपतिर्भूपः समुद्रोऽम्बुधिवारिधी ।।

यौगिकशब्दैर्यथा—

क्षितीशः क्ष्मापतिः क्ष्मापः क्षोणीनाथः क्षमापतिः ।
लक्ष्मीशः श्रीपतिः श्रीपः स्वर्नाथः स्वर्गनायकः ।।

निरर्थैर्यथा—

सकाकाचमसाराचसमासाविहारादरा ।
सगावगावरासासोरानोरासकधीमधी ।।

सार्थकैर्यथा—

तर्णको वर्णकश्चैव कर्णकश्चित्रपर्णकः ।
कुण्डं मुण्डं महामोकं स्तोकं सङ्कुलसङ्कुरौ ।।

लाटानुप्राससम्भवैर्यथा—

यामिनीं यामिनीनाथो मेदिनीं मेदिनीश्वरः ।
नलिनीं नलिनीकान्तस्तोषयामास तोषवान् ।।

षड्भाषासंश्रितैर्यथा—

संस्कृतं प्राकृतञ्चैव शौरसेनी च मागधी ।
पैशाचिकी चाऽपभ्रंशं षड् भाषाः परिकीर्तिताः ।।

संस्कृतं प्रस्तुतोक्तमेव । प्राकृतभवैर्यथा—

सम्पया सरिया एसा दीहाऊ धणुहं धिणू ।
वीसा तीसा कुहो किम्पि केसुयं किं सुयं तहा ।।
सम्पत्सरिदेषा दीर्घायुर्धनुषन्धेनुः ।
विंशतिस्त्रिंशत्कुतः किमपि किंशुकं किं श्रुतं तथा ।।

शौरसेनीभवैर्यथा—

कुदो अन्देउरं दाव पदिण्णापुरवं कधम् ।
नाधो भविय भोदूण भविस्सदि करिस्सदि ।।
कुतः अन्तःपुरं तावत्प्रतिज्ञापूर्वं कथम् ।
नाथो भविता भूत्वा भविष्यति करिष्यति ।।

मागधीशब्दैर्यथा—

एते सुपुलिसे विज्जाहले जाणादि सुत्थिदे ।
कण्णका वलणं पण्णा पण्णाहं पण्णवज्जिदे ।।
एष सुपुरुषः विद्याधरो जानाति सुस्थितः ।
कन्यका वरणं प्रज्ञा पुण्याहं पुण्यवर्जितः ।

पैशाचीभवैर्यथा—

कुतुम्बकं हितपकं जातिसो तातिसो गुनो ।
भरिआ कसटं सक्को सङ्घो गन्तून पव्वती ।।
कुटुम्बकं हृदयं यादृशः तादृशः गुणः ।
भार्या कष्टं स्वर्गः सङ्घः गत्वा पार्वती ।।

अपभ्रंशभवैर्यथा—

तरुहे गिरिहे जोसो जिमच्छम्मुहु संकुरु ।
जहिं तहिं सामि यहो कहांहु तउ आगदो ।।

तरुः गिरिः यथा षण्मुखः शङ्करः ।
यत्र तत्र स्वामिन् अहो कुतः भगवन् आगतः ।।

शब्दभेदजैर्यथा—

वर्णानेकस्य शब्दस्य सर्वान् नवनवस्वरैः ।। २७ ।।
संयोज्य जनिता ये ते शब्दाः स्युः शब्दभेदजाः ।
अनुप्रासेषु चित्रेषु सोपयोगा भवन्त्यमी ।। २८ ।।

यथा—

करः कूरः किरिः कीरः क्रूरः कुररकोरकौ ।
कुर्कुरः कर्करः कारा राका रङ्कोऽङ्कुरः करी ।।
रिरी रोरौ रिराकारः करीराकररङ्कुकाः ।
काककेकिककङ्कोककारकोकाऽङ्ककेकराः ।।

पुनरुपायान्तरमाह--

कथापुरादिसर्वार्थदिनकृत्यादिवर्णनैः ।
लोकानां दृष्टचेष्टाभिः छन्दोऽभ्यासं समर्थयेत् ।। २९ ।।

कथा रामायणभारतादयः । कथाभिर्यथा—

अस्त्ययोध्या पराऽयोध्या पुरी स्वर्गपुरीसमा ।
तस्यां दशरथो राजा समभूद् भूरिविक्रमः ॥
तनयाः समजायन्त चत्वारस्तस्य भूपतेः ।
रामो लक्ष्मणभरतशत्रुघ्न इति नामभिः ।। इत्यादि ।

पुरादिवर्णनैर्यथा—

पुरनृपकुमारमन्त्रिप्रयाणरणदूतजलधिवनगिरयः ।
रविचन्द्रोदयपरिणयऋतुमधुजलकेलिरतविरहाः ॥
ध्वस्तध्वान्तभरं (१)रत्नवेश्मविस्मेररश्मिभिः ।
राजधानी दिनस्येव तत्पुरं द्योतते सदा ।। इत्यादि ।

सर्वार्थवर्णनैः, ये केऽपि पदार्था दृग्गोचरीभवन्ति ते वर्ण्याः, यथा—

स्थाली भाति विशालेयं सिद्धान्नपरिपूरिता ।
भूरिकर्पूरसौरभ्यैरम्भोभिः शोभते घटः ।।

दिनकृत्यवर्णनैर्यथा—

अयमुद्यमवान् ब्राह्मे मुहूर्ते निद्रयोज्झितः ।
सद्यः शय्यां परित्यज्य चक्रे देवगुरुस्मृतिम् ।।
नमस्कारपरावर्तपरायणमनाः क्षणम् ।
स्थित्वा बाह्यभुवं गत्वा देहचिन्तां विनिर्ममे ।।
सदनं पुनरागत्य विदधे दन्तधावनम् ।
स्नानमाधाय शुद्धात्माऽऽनर्च देवं जगद्गुरुम् ।। इत्यादि ।

---

( १ ) ध्वस्तध्वान्तभरा—इति क०पुस्तके पाठः ।

लोकानां या चेष्टा दृश्यते सा सा काव्यबन्धे न कार्या, यथा—

पुष्पाणि पाणिदेशेऽसौ कृत्वा क्रीणाति कामुकः ।
ताम्बूलिकोऽपि ताम्बूलमस्य पश्याऽर्पयत्यसौ ॥
मित्रेण सममालापमयमारचयत्यहो ।
अयं हृष्टो हसत्युच्चैरयं गायति गायनः ॥

पुनरुपायान्तरमाह—

**तदर्थान्यपदैः स्वान्यश्लोकार्थपरिवर्तनात् ।**
**तत्रैव छन्दस्यभ्यस्येदन्यच्छन्दोन्तरेष्वपि(१) ॥ ३० ॥**

स्वकृतं परकृतं वा श्लोकं तदर्थेन च नवैः पदैस्तेनैव छन्दसा छन्दोऽन्तरैर्वा परिवर्तयेत् ।
यथा तत्रैव छन्दसि—

प्रत्यर्थिपृथिवीपालतमोजालदिवाकरः ।
नीतिव्रततिपर्जन्यो राजते पृथिवीपतिः ॥
प्रत्यनीकावनीकान्तध्वान्तविध्वंसनांशुमान् ।
नयवल्लिवनाम्भोदः शोभते भूमिवल्लभः ॥
प्रतिपक्षक्ष्मानाथतिमिरोन्माथभानुमान् ।
न्यायवल्लीपयोवाहः स विभाति भुवो विभुः ॥

छन्दोन्तरैर्यथा—

प्रत्यर्थिपृथ्वीहृदयाधिनाथध्वान्तौघविध्वंसनवासरेशः ।
सन्नीतिवल्लीवननीरवाहो विश्वम्भराया दयितो विभाति ॥
दुर्धरारिधरणीधवोद्धतध्वान्तमण्डलविखण्डनांशुमान् ।
नीतिवल्लिवननूतनाम्बुदो मेदिनीविभुरसौ विभासते ॥
क्रूरारातिक्ष्मापजातिप्रतानध्वान्तस्तोमध्वंसनव्योमरत्नम् ।
न्यायोन्मीलद्वल्लिनव्याम्बुवाहो भूभामिन्या वल्लभो भासतेऽसौ ॥
दृप्यद्विरोधिधरणीदयितान्धकारप्राग्भारतारमददारुणतीक्ष्णभानुः ।
सन्न्यायवर्तिवननूतनतोयवाहो विभ्राजते वसुमतीयुवतीभुजङ्गः ॥

मालिन्यामेव यथा—

अवनिधवकिरीटन्यस्तवैदूर्यरत्नद्युतिमिषमधुपालीसेव्यपादारविन्दः ।
निखिलनृपतिचूडामाल्यसौरभ्यलुभ्यन्मधुपयुवतिराजीनादवाचालपादः ॥
अतुलधरणिपालश्रेणिवेणिप्रसूनप्रसृमरमकरन्दस्नातपादारविन्दः ।
प्रणमदवनिनाथोत्तंसमाणिक्यमालाकिरणघुसृणनीरस्नातपादाब्जयुग्मः ॥
नमदखिलधरित्रीनाथचूडाकिरीटस्फटिककिरणमालासेव्यमानाङ्घ्रिपद्मः ।
निजचरणनखांशुव्याजकाश्मीरपङ्कक्षणतिलकितनम्रीभूतभूपालफालः ॥
ततनृपतिकिरीटस्फारमाणिक्यमालास्फुरदरुणमयूखद्योतमानाङ्घ्रिपीठः ।

---

(१) तत्रैव छन्दसा छन्दोन्तरैर्वा परिवर्तयेत्-इति ख०पुस्तके पाठः ।

प्रणतनृपतिराजीमौलिकोटीरकोटीस्फटिकरुचिजलान्तःशोभमानाङ्घ्रिपद्मः ॥

एवं परकृतान्यपि काव्यानि पदान्तरैश्छदोन्तरैश्छन्दःसिद्धये परावर्तयेत् ।

अक्लेशेन छन्दसां ज्ञानोपायमाह—

**कियन्मात्रेषु सिद्धेषु छन्दःस्वभ्यासतः सुधीः ।**
**शेषाणां छन्दसां सिध्यै छन्दोमर्माणि चिन्तयेत् ॥ ३१ ॥**

यथा—भद्रिकायामन्ते गलाभ्यां रथोद्धता । इन्द्रवज्रोपेन्द्रवज्रयोरन्तगुरोः प्रागधिकलघुना इन्द्रवंशावंशस्थे भवतः । विद्युष्यामन्त्यवर्णद्वयात् प्राक् लघुना मोटकम् । मोटके पूर्वगुरुस्थाने लाभ्यां तोटकम् । रथोद्धतायामादौ गुरुणा ललिता । वंशस्थे सप्ताक्षराग्रे लघुना मञ्जुभाषिणी । रथोद्धतायामादौ ताभ्यां नन्दिनी । स्वागतायां प्रथमं लाभ्यां कुटजम् । वंशस्थे पूर्वलघुना सुदन्तम् । इन्द्रवज्रायां चतुरक्षराग्रे नगणेन वसन्ततिलका । शालिन्यां चतुरक्षरान्ते चतुर्गुरुभिश्चित्रा । वसन्ततिलकायाः प्रान्तगुरोः प्राक् लघुना मृदङ्गकः । शिखरिण्याः प्रान्तगुरोः प्राक् लघुद्वयस्थाने गुरुणा जयानन्दम् । शालिन्यां चतुरक्षराग्रे नसाभ्यां मन्दाक्रान्ता । लक्ष्म्यां सप्ताक्षरप्रान्ते नगाभ्यां काञ्ची । मन्दाक्रान्तायां चतुरक्षराग्रे लघुना चन्द्रलेखा । मन्दाक्रान्तायां चतुरक्षराग्रे गुरुणा कुसुमितलतावेल्लिता । हरिण्यामादौ लघुना ललितम् । मन्दाक्रान्तायामादौ लगाभ्यां मेघविस्फूर्जिता । शार्दूले आद्यगुरुस्थाने लाभ्यां मत्तेभविक्रीडितम् । शार्दूलस्य प्रान्तचतुरक्षरस्थाने सगणेन शार्दूलललितम् । मेघविस्फूर्जितायां षडक्षराग्रे लघुना शोभा । काञ्च्यां सप्ताक्षराग्रे लाभ्यां चित्रमाला । काञ्च्यां सप्ताक्षरान्ते नभगैः स्रग्धरा । काञ्च्यां सप्ताक्षराग्रे नगणेन स्रग्धरायामाद्यगुरुस्थाने। लाभ्यां महास्रग्धरा । शार्दूलविक्रीडितान्ते सलगैर्विभ्रमगतिः । प्रमिताक्षरायामाद्यपञ्चाक्षरैः पर्यन्ते क्षिप्तैर्द्रुतविलम्बितम् । स्रग्धराया आद्यसप्ताक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैर्जया । स्रग्धराया आद्यसप्तक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैर्ज्योत्स्ना । मालिन्या आद्याष्टाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैश्चन्द्रोद्योतः । मालिन्या आद्याष्टाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैरुपमालिनी । मन्दाक्रान्ताया आद्यदशाक्षरैः शिखरिण्याः प्रान्तषड्क्षरैर्मदनललिता । शालिन्या आद्यचतुरक्षरैः शार्दूलस्य प्रान्तद्वादशाक्षरैःकामलता । मन्दाक्रान्ताया आद्यदशाक्षरैःशार्दूलस्य प्रान्तसप्ताक्षरैर्हरिणी । हरिण्या आद्यदशाक्षरैः शालिन्याः प्रान्तसप्ताक्षरैः पद्मम् । हरिण्या आद्यदशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैः रोहिणी । स्रग्धराया आद्यसप्ताक्षरैः शार्दूलस्य प्रान्तैकादशाक्षरैः काञ्ची । चन्द्रलेखाया आद्यैकादशाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैः चलम् । चन्द्रलेखाया आद्यैकादशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैः केसरम् । हरिण्या आद्यैकादशाक्षरैः शलिन्याः प्रान्तसप्ताक्षरैश्चन्द्रमाला । शिखरिण्या आद्यद्वाशाक्षरैर्हरिण्याः प्रान्तसप्ताक्षरैर्मकरन्दिका । शिखरिण्या आद्यद्वादशाक्षरैः शार्दूलस्य प्रान्तसप्ताक्षरैः छाया । स्रग्धराया आद्यचतुर्दशाक्षरैः शिखरिण्याः प्रान्तषडक्षरैः सुवदना । इत्यादि स्वबुद्ध्याऽभ्यूह्यम् ।

अथ यतिशिक्षामाह—

पादान्ते आद्याक्षरविच्छिन्नपादान्तयोर्यतिः क्रियते ।
लुप्तालुप्तविभक्तिकयोः पुनरर्धे समाससन्धी न ॥ ३२ ॥

पादान्ते यथा—

शाश्वतानन्दरूपाय तमःस्तोमैकभास्वते ।
सर्वज्ञाय नमस्तस्मै कस्मैचित्परमात्मने ॥

न त्वेवम्—

नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे । इति ।

लुप्तविभक्तिके यथा—

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।

अलुप्तविभक्तिके यथा—

वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् । इति ।

आद्याक्षरविच्छिन्ने लुप्तालुप्तविभक्तिके यथा—

उत्तुङ्गस्तनकलशद्वया नताङ्गी लोलाक्षी विपुलनितम्बशालिनी च ।
यक्षश्चक्रे जनकतनया स्नानपुण्योदकेषु । इत्यादि ।

श्लोकार्द्धेन समासो यथा—

सुरासुरशिरोरत्नराजिनीराजितक्रमः ।
जयत्यपारसंसारपारदृश्वा जिनेश्वरः ॥

न त्वेवम्—

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी-
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ॥

अर्धेन सन्धिर्यथा—

नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥

यतिं कुर्यात् पदान्तस्थां पदमध्येऽपि कुत्रचित् ।

यथा—

पर्याप्तं तप्तचामीकरकनकतटे श्लिष्टशीतेतरांशौ । इत्यादि ।

यथा वा—

कूजत्कोयष्टिकोलाहलमुखरभुवः प्रान्तकान्तारदेशाः ।
हासो हस्ताग्रसंवाहनमपि तुलिताद्रीन्द्रसारद्विषोऽस्य ।
वैरञ्चानां तथोच्चारितचतुरऋचां चाननानां चतुर्णाम् ।
खड्गे पानीयमाह्लादयति हि महिषं पक्षपाती पृषत्कः । इति ।

स्यात् पूर्वोत्तरभागस्थैकाक्षरत्वे तु नो यतिः ॥ ३३ ॥

पूर्वभागस्थैकाक्षरत्वे यथा—

एतस्या गण्डतलममलं गाहते चन्द्रकक्षाम् ।

एतासां राजति सुमनसां दामकण्ठावलम्बी । इति ।

उत्तरभागस्थैकाक्षरत्वे यथा—

सुरासुरशिरोरत्ननिघृष्टचरणारविन्दः शिवः, इति ।

**पादान्तेऽपि पदमध्ये न प्रायः क्रियते यतिः ।**

यथा—

प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्दहेतुम् । इति ।

**सन्धौ स्वरः क्वचित् पूर्वान्तवत् क्वचित् परादिवत् ॥ ३४ ॥**

पूर्वान्तवद्यथा—

स्यादस्थानोपगतयमुनासङ्गमेवाऽभिरामा ।

जम्भारातीभकुम्भोद्भवमिव दधत इति ।

दिक्कालाद्यनवच्छिन्नाऽनन्तचिन्मात्रमूर्तये ।

परादिवद्यथा—

स्कन्धे विन्ध्याद्रिबुद्ध्या निकषति महिषस्याहितोऽसूनहार्षीत्—इति ।

**न पूर्वोत्तरभागस्थैकाक्षरे स्वरसन्धयः ।**

यथा—

अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति । इति ।

**स्यात्सन्धौ व्यञ्जनं याद्यादेशोऽपि च परादिवत् ॥ ३५ ॥**

सन्धौ व्यञ्जनं यथा—

शूलं तूलं तु गाढं प्रहर हर हृषीकेश केशोपि वक्रश्चक्रेणाकारि किन्ते—इति ।

याद्यादेशोपि यथा—

अच्छिन्नप्रसराणि नाथ भवतः पातालकुक्षौ यशां-

स्यद्यापि क्षपयन्ति कोकिलकुलच्छायासपत्नं तमः । इति ।

विततघनतुषारक्षोदशुभ्रासु दूर्वा-

स्वविरलपदमालामुज्ज्वलामुल्लिखन्तः । इति ।

**सम्बद्धानामुत्तरेण पादेनैकचरस्पृशाम् ।**

**प्रादीनां पूर्वपादान्ते यतिर्न क्रियते क्वचित् ॥ ३६ ॥**

यथा—

दुःखं मे प्रक्षिपति हृदये दुःसहस्त्वद्वियोगः ।

**पूर्वपदसम्बद्धानामनेकाक्षराणां तु क्रियते ।**

पूर्वपदसम्बद्धानां यथा—

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।

अनेकाक्षराणां तु यथा—

दूरारूढप्रमोदं हसितमिव परिस्पृष्टमासां सखीभिः । इति ।

**प्राक्पदाश्रितैकाक्षरं चादेः पूर्वं तु नो यतिः ॥ ३७ ॥**

यथा—

खादु स्वच्छं च सलिलमिदं प्रीतये कस्य न स्यात् ।

अप्राकपदसम्बद्धस्यानेकाक्षरस्य तु पूर्वं भवति ।

यथा—

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ।

प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् । इत्यादि ।

इत्याद्यौचित्यतो ज्ञेया यतिः श्रुतिसुखा बुधैः ॥ ३८ ॥

यदुक्तम्—

अबद्धर्थाऽपि मधुरा मनो हरति भारती ।
तमोनिचयसङ्काशा मत्तनादेव कोकिला ॥

इति श्री जिन० छन्दःसिद्धिप्रताने छन्दोऽभ्यासस्तबको द्वितीयः ॥

## अथ छन्दःपूरणाय सामान्यशब्दाः ।

छन्दःस्वनुष्टुब्मुख्येषु शब्दाः शीघ्रत्वसिद्धये ।
क्रमाक्रमोचिता ज्ञेयाः सामान्यैकाक्षरादिकाः ॥ ३९ ॥
प्रथमेऽनुष्टुभः पादे क्रमादेकाक्षरादयः ।
व्यतिक्रमाच्च कथ्यन्ते शब्दाः साधारणा यथा ॥ ४० ॥

[ प्रथमैकाक्षरम्—श्री सं सन् द्राक् विश् आ नि श्राक् सु उत् तत् ।

आद्याक्षरद्वयम्--श्रीमत् श्रेष्ठम् ज्येष्ठम् प्रेष्ठम् प्राज्यम् प्रौढम् सारम् स्फारम् तारम् रुच्यम् धुर्यम् वर्यम् रम्यम् काम्यम् कम्रम् कान्तम् हृद्यम् हारी मञ्जु चारु वल्गु सत्यम् नित्यम् कामम् चञ्चत् वल्गत् स्फूर्जत् क्रीडत् सदा स्वयम् स्फुटम् ध्रुवम् भृशम् रयात् जवात् प्ररम् वरम् महत् पटुः बहु स्फुरत् लसत् लुलत् ललत् ।

आद्याक्षरत्रयम्--निःशङ्कम् सच्छायः सच्छोभम् शोभाढ्यम् वेगेन श्रीप्राज्यम् विस्फूर्जत् विक्रीडत् प्रोद्दाम प्रोत्तुङ्ग प्रोत्ताल प्रक्रीडत् सपदि प्रकटम् विकसत् विलसत् निकामम् नितान्तम् प्रकामम् प्रसर्पत् उदञ्चि विसर्पि रवेण जवेन सर्वदा सर्वथा सर्वतः सत्वरम् निश्चितम् वेगतः विस्फुरत् प्रोल्लसत् ।

आद्याक्षरचतुष्टयम्—रयादेव जवादेव सर्वकालम् सुनिश्चितम् स्फारशो- प्रभायुक्तः स्फूर्जच्छायः श्रियान्वितः ।

चतुर्णामग्रे एकाक्षरम्--हि तु न च स ।

चतुर्णामग्रेऽक्षरद्वयम्—रयात् स्वयम् स्फुटम् भृशम् सदा अन्वहं जवात् महत् वरम् परम् ध्रुवम् द्रुतम् स्फुरत् लसत् लुलत् मिलत् ललत् ।

चतुर्णामग्रेऽक्षरत्रयम्—रवेण जवेन प्रभावविभावौ सशोभसलक्ष्म्यौ वितानप्रपञ्चौ ।

चतुर्णामग्रे चतुरक्षराणि—रयादेव जवादेव वराभोगबहुश्रीकौ लसच्छ्रीकलसल्लक्ष्म्यौ स्फुरच्छोभवरच्छायौ ।

अथ व्यतिक्रमेणाऽक्षराणि, अन्त्याक्षरम्—श्रीः विट् द्युत् जुष् ।

अन्त्याक्षरद्वयम्—सम्यक् वेगात् प्रौढम् प्राज्यम् सत्यम् नित्यम् कामम् कान्तम् श्रीमान् शीघ्रम् श्रेष्ठम् स्फारम् तारम् वर्य्यम् हृद्यम् ।

अन्त्याक्षरत्रयम्—उत्तालः सल्लक्ष्मीः सश्रीकः उद्दामः शोभाढ्यः लक्ष्मीवान् उच्छ्रायः सच्छायः सच्छोभः काम्यश्रीः वर्यश्रीः रम्यश्रीः ।

शब्दाः पूर्वोदिता एव व्यतिक्रमे चतुरक्षराः ।

अन्त्याक्षरपञ्चकम्—प्रवरश्रीकम् रुचिरच्छायम् स्फुटलक्ष्मीकम् रयतःसम्यक् वेगतः श्रीमान् कलयायुक्तः सततंकान्तः प्रकटच्छायः ।

अन्त्याक्षरषट्कम्—उदञ्चितच्छायः चारुतरच्छायः स्फुरितलक्ष्मीकः रम्यतमश्रीकः प्रौढश्रिया युक्तः वरतराटोपः कान्ततमश्रीकः प्रकटशोभाढ्यः ।

सकलोपि पादः—समुल्लसितशोभाढ्यः चारुचञ्चत्कलाशाली उद्यद्हृद्यतरस्फूर्तिः वल्गुवल्गद्वपुर्लक्ष्मीः विभासंभारसंशोभी प्रभाप्रभावसम्भाव्यः विभाप्राग्भारसारश्रीः रोचिःसञ्चयरोचिष्णुः । ]

द्वितीयेऽनुष्टुभः पादे यावदेवाऽक्षरत्रयम् ।
विज्ञेयं पूर्वपादोक्तं कथ्यन्ते चतुरक्षराः ॥ ४१ ॥

[ सर्वकालम् सर्वदैव रयादेव जवादेव शोभायुक्तः झटित्येव रयादिह जवादिह प्रौढलक्ष्मीः स्फूर्जच्छायः बहुश्रीकः वरच्छायः वराभोगः महाभोगः प्रकटश्रीः विकटार्चिः ।

चतुर्णामग्रतः—पूर्वापादस्यैवाऽक्षरत्रयम् ।

चतुर्णामग्रे चत्वारि—रयादहो जवादहो मनोरमम् मनोहरम् समन्ततः झटित्यपि वरद्युतिः महामहाः ।

अथ व्यतिक्रमेणाऽन्त्याक्षरम्—भाक् जुष् रुक् हृत भृत वृत मद् वत् भू दृक् ज हि वै हे भो हा तत स सा था प्य सा व दो य म ये अरे ।

अन्त्याक्षरद्वयम्—स्फुटम् भृशम् द्रुतम् ध्रुवम् स्वयम् रयात् जवात् अलम् सदा सना शनैः अरम् परम् चिरात् शुभम् वरम् ।

अन्त्याक्षरत्रयम्—सर्वदा सर्वतः सर्वथा नित्यशः सत्वरम् सन्ततम् निश्चितम् वेगतः उच्चकैः अञ्जसा शीघ्रतः सुन्दरम् पेशलम् कोमलम् निर्मलं मञ्जुलम् ।

व्यतिक्रमेऽपि चतुरक्षरशब्दाः पूर्वोक्ता एव ।

अन्त्याक्षरपञ्चकम्—मञ्जुलस्थितिः सुन्दरद्युतिः प्रवरच्छविः श्रेष्ठवैभवः कोमलक्रमः प्रसरद्रुचिः प्रभवत्प्रभः प्रसरद्रसः कान्तिमण्डितम् द्युतिसुन्दरम् छविराजितम् प्रभयान्वितम् नववैभवः विभवद्विभः स्फुरितोदयः विकटोच्छ्रयः ।

अन्त्याक्षरषट्कम्—सुन्दरदीधितिः अद्भुतवैभवः भूरितरद्युतिः उद्यतभाततिः कान्तिनिकेतनम् इद्धतमक्रमः चारुतरच्छविः अक्षिमहोत्सवः।

सकलपादः—रोचिर्निचयरोचितः कान्तकान्तिनिकेतनम् द्युतिमण्डलमण्डितः विभावैभवभासुरः विभवद्भूरिविभवौ मनोहारितमक्रमः महामहिममन्दिरम् महोदयमहोमयः ।

पादद्वयम्--

चमत्कारकरस्फारप्रभाप्राग्भारभासुरः ।
मनोरमतमक्रीडत्कान्तिमण्डलमण्डितः ।
मनोहरतरस्फूर्जदूर्जस्वलकलोज्ज्वलः ।
नयनानन्दनोद्दामरामणीयकमन्दिरम् ।
विस्फुरद्रश्मिविस्मेरविस्मयाविष्टविष्टपः ।
प्रीतिस्फीतिकरप्रेङ्खत्प्रभासंहतिसंहृतः ।
मनोहारिमदोच्छ्रायकायच्छायचयान्वितः ।
अत्यद्भुतवपुःशोभासम्भ्रान्तभुवनत्रयः । ]

एवं साधारणैः शब्दैरौचित्येन नियोजितैः ।
वृत्ताश्छन्दःसु सर्वेषु कुर्वन्ति पदयोजनाम् ॥ ४२ ॥

[ अथेन्द्रवज्रायां पूर्वाक्षरद्वयम्—उद्यत् माद्यत् पञ्चत् राजत् रङ्गत् सर्पत् भास्वत्

आद्यमक्षरत्रयम्—भ्राजिष्णु विभ्राजि रोचिष्णु प्रधानः प्रशस्य वर्द्धिष्णु संशोभि ।

आद्यमक्षरचतुष्टयम्—स्फारस्फुरत् प्रौढोल्लसत् वर्योदयत् स्पष्टस्फुरत् ।

अक्षरपञ्चकम्—विस्मेरशोभः प्रोल्लासिलक्ष्मीः उत्सर्पिशोभः स्मेरप्ररोहत् ।

अक्षरपञ्चकात्--बहु दृढ गुरु जव वर स्फुट घन स्मितम् ।

अक्षरपञ्चकात्—निबिड बहुल रुचिर सुभग विमल प्रवर प्रकट प्रबल प्रचुर प्रसृत प्रसभ प्रभवत् विलसत् विकसत् विहसत् विचर- प्रचरत् प्रसरत् ।

अन्त्याक्षरत्रयम्--प्रधान प्रशस्य प्रभाव विभाव प्रवीण शुभश्रीः परश्रीः सुशोभः स्फुटश्रीः प्रसर्पत् प्ररोहत् विसर्पत् विकासि विलासि विसर्पि विसारि ।

उपेन्द्रवज्रायां पूर्वाक्षरद्वयम्--लसत् मिलत् स्फुरत् ज्वलत् स्फुटम् ध्रुवम् ।

आद्यवर्णत्रयम्--प्रधान प्रशस्य प्रवीण धुरीण प्रवेक विकासि विसर्पि विलासि ।

आद्यवर्णचतुष्टयम्--वरोदयत स्फुटस्फुरत् परिस्फुरत् लसद्विभा मिलत्प्रभा ।

आद्याक्षरपञ्चकम्--उदारसर्पत् उदञ्चितश्रीः विसर्पिलक्ष्मीः विकासिशोभा वरप्ररोहत् । शेषमिन्द्रवज्रावत्, इन्द्रवज्रोपेन्द्रवज्राभ्यामुपजातिश्छन्दः ।

रथोद्धतायामाद्यमक्षरद्वयम्--प्राज्य स्फार प्रौढ स्पष्ट चारु हारि तार सार हृद्य रम्य सर्पि स्मेर ।

आद्याक्षरत्रयम्--विस्फुरत् सञ्चरत् प्रोल्लसत् पेलवम् सुन्दरम् मन्जुलम् अद्भुत उत्कट उच्छ्रित ।

अक्षरत्रयाग्रे--नवलसत् दृढमिलत् वरतर नवमह गुरुतर गुरुतम ।

सप्तानामग्रे--मनोहरम् महामहः वरद्युतिः शुभच्छविः गुणालयः श्रिया युतः स्फुरन्महाः जयोच्छ्रितः गुणोज्ज्वलः ।

स्वागतायां सप्ताक्षराणि यावद् रथोद्धतावत् ।

अन्त्यवर्णचतुष्टयं यथा--स्फुटलक्ष्मीः गुणरम्यः प्रवरश्रीः वरशोभः रुचिरश्रीः परिसर्पत् नवराजत् वरवल्गत् ।

शालिन्यां प्रथमाक्षरद्वयम्--सत्यम् नित्यम् शश्वत् सर्पत् राजत् क्रीडत् रङ्गत् बलात् प्रेङ्खत् ।

आद्यमक्षरचतुष्टयम्—स्फारस्फूर्जत् लीलोन्मीलत् चारूदञ्चत प्रौढप्रेङ्खत् उच्चैश्चञ्चत् वल्गुवल्गत् चञ्चल्लक्ष्मीः स्वच्छच्छायः ।

चतुर्णामक्षराणामग्रे—चारु हारि सर्पि स्मेर स्फार वल्गु रम्य नव्य ।

चतुर्णामग्रे—विस्फुरत् प्रोल्लसत् सञ्चरत् पेलव पेशल सुन्दर मन्जुल प्रेङ्खित स्मेरित ।

सप्तानामग्रे—भ्राजमान राजमान स्फारशोभः शोभमानः दीप्तरूपः स्फाररूपः प्राप्तलीलः प्रौढलक्ष्मीः मन्जुलश्रीः ।

वसन्ततिलकायां चतुर्णामक्षराणामग्रे लघ्वक्षरत्रयम्—सपदि प्रभवः प्रसरत् प्रवर विमल बहुल ।

चतुर्णामग्रे—दृढमिलत् परिलसत् वरमहाः वरगुणः नवरुचि प्रसृमर शुचितम वरतर परिमल परिचय सुनिबिड प्रतिपद प्रतिदिन । अन्यदिन्द्रवज्राप्रान्त्यषडक्षरवत् ज्ञातव्यम् ।

मालिन्यामाद्यमक्षरद्वयम्—बहु दृड स्फुट घन ।

आद्यमक्षरत्रयम्—निबिड प्रसृत बहुल प्रवर ।

आद्यमक्षरचतुष्टयम्—प्रसृमर अविरल सुनिबिड घनतर ।

आद्यमक्षरपञ्चकम्—बहुलतम प्रकटतर अतिनिबिड अधिकशुभ ।

आद्यमक्षरषट्कम्—अविरलतम प्रसृमरतम बहुलनिबिड अधिकरुचिर ।

आद्याक्षराष्टकम्—अविरलतरसर्पत् अतिरुचिरविसर्पत् बहुलनिबिडराजत् प्रसृमरतरचञ्चत् ।

अष्टानामक्षराणामग्रे—हृद्य रम्य तार सार ।

अष्टानामग्रे—सप्रभः सच्छविः प्रोत्कट विस्फुरत् ।

एकादशानामग्रे—राजमान प्रौढशोभ प्राप्तलील स्फाररूप ।

व्यतिक्रमेणाऽन्त्याक्षरद्वयम्—रम्य हृद्य सार चारु ।

अन्त्याक्षरत्रयम्—प्रधान प्रशस्य प्रवीण स्फुटश्रीः सशोभ वरश्रीः ।

चतुरक्षरास्त एव राजमानप्रभृतयः ।

अन्त्याक्षरपञ्चकम्—विभ्राजमान विस्फारशोभ विस्तीर्णलक्ष्मीः संशोभमान ।

अन्त्याक्षरसप्तकम्—राजमानप्रभाव द्योतमानप्रपञ्च स्फायमानस्वरूप श्रेणिसंरम्भरम्यम् ।

अन्त्याक्षरनवकम्—लीलारोचमानप्रपञ्च मालाशोभमानान्तरालम् शोभावैभवभ्राजमानम् राजीराजमानस्वरूपम् ।

अन्त्याक्षरदशकम्—विलासारम्भसंरम्भरम्यम् विभावाभोगसौभाग्ययुक्तम् समूहोल्लास्यमानप्रभावम् वितानोत्तायमानस्वरूपम् ।

अन्त्यैकादशाक्षराणि—परिणाहस्फीतलक्ष्मीविलासम् परिणामभ्राजितोद्दामशोभम निकुरम्बभ्राजमानम् समुदायस्फायमानप्रमोदम् ।

शिखरिण्यामाद्यमक्षरद्वयम्—लसत् मिलत् चलत् ललत् स्फुटम् ध्रुवम् द्रुतम् भृशम् स्वयम् ।

आद्यमक्षरत्रयम्—विसर्पत् प्ररोहत् विराजत् नितान्तम् प्रकामम् स्फुटोद्यत् ।

आद्याक्षरचतुष्टयम्—स्फुटस्फूर्जत् स्फुरल्लक्ष्मीः विसर्पिश्रीः वरच्छायः नवोन्मीलत् परिक्रीडत् नवप्रेङ्खत् नवोदञ्चत् ।

आद्यमक्षरषट्कम्—प्रकामस्फूर्जत् समुन्मीलल्लीला नवप्रेङ्खल्लक्ष्मीः परिस्फूर्जच्छायः स्फुटश्रीरोचिष्णुः ।

षण्णामग्रे—प्रसृमर विसृमर प्रकटित वरतर वरतम ।

षण्णामेवाग्रे—परिलसित नवललित प्रसृततर निचिततर निचिततम ।

षण्णामग्रे—प्रबलविलसत् प्रचुरविचरत् नवपरिलसत् घनतरचरत् नवपरिलसत् घनपरिचरत्

षण्णामग्रे—प्रकटतरलक्ष्मीः विकसितनवश्रीः विशदतरशोभः ।

त्रयोदशानामग्रे—नवमहाः शुभरुचिः स्फुटगुणः विकसित विलसित ।

हरिण्यां पूर्वाक्षरषट्कम्—रुचिरविचरत् विमलविलसद् नवनवमिलत् ।

षण्णामग्रे—विभ्राजिष्णुः संवर्द्धिष्णुः नव्योन्मीलत् प्रौढक्रीडत् चारूदञ्चत् स्फारस्फूर्जत् ।

दशानामग्रे—प्रधान प्रशस्य प्रवीण प्ररूढ विसर्पि विसारि विलासि विराजि ।

दशानामग्रे—मनोहर विकस्वर नवोदित शुभोच्छ्रित प्रकाशित ।

दशानामग्रे—वरप्रचरत् नवप्रसरत् विसर्पिरुचिः विलासिमहः ।

दशानामग्रे—विकस्वरवैभवः स्फुटस्फुरितोदयः प्रशस्यरुचिस्थितिः श्रिया परिलासितः ।

मन्दाक्रान्तायामाद्यमक्षरद्वयम्—उद्यत् माद्यत् राजत् रङ्गत् प्रेङ्खत् क्रीडत् भ्राजत् ।
आद्याक्षरचतुष्टयम्—स्फारस्फूर्जत् वल्गुवल्गत् उच्चैश्चञ्चत् लीलोन्मीलत् चञ्चल्लक्ष्मीः ।
चतुर्णामग्रे—बहु दृढ घन पर ।
चतुर्णामग्रे—निबिड बहुल प्रसृत स्फुरित रुचित ।
चतुर्णामग्रे—घनतर बहुतम सुनिबिड विसृमर ।
चतुर्णामग्रे—प्रवरविलसत् रुचिरविचरत् स्फुटतररुचिः बहुतममहः ।
दशानामग्रे शेषं मालिनीप्रान्तसप्ताक्षरवत् ।
आद्यवर्णदशकम्—उच्चैश्चेतोहरपरिलसत् विश्वानन्दप्रदसमुदयम् प्रौढप्रीतिप्रदविसृमर हर्षोत्कर्षप्रकटनलसत् ।
शार्दूलविक्रीडिते आद्यवर्णत्रयम्—प्रक्रीडत् प्रोन्मीलत् प्रस्फूर्जत् उत्प्रेङ्खत् नव्योद्यत् स्फारश्रीः चारुश्रीः लक्ष्मीवान् सच्छायः शोभावान् ।
आद्याक्षरचतुष्टयम्—चञ्चच्चारु रङ्गत्तुङ्ग प्रेङ्खत्तार स्मेरोद्दाम विभ्राजिष्णुः संवर्द्धिष्णु स्फारस्मेर ।
आद्यपञ्चाक्षराणि—लीलोन्मीलित उच्चैश्चुम्बित स्फारस्मेरित चारूदञ्चित ।
आद्यषडक्षराणि—उद्दामप्रसरत् प्रोत्तालप्रमिलत् प्रावीण्यप्रचलत् नव्योत्सर्पिरुचिः ।
षण्णामग्रे—प्रचारि प्रसारि विसर्पि मनोज्ञ प्रशस्य प्रधान प्ररोहि विलासि ।
नवानामग्रे—विलसत् विकसत् विहसत् विचरत् रुचिर सुभग बहुल विमल विभव ।
द्वादशानामग्रे—स्फारस्फुरत् स्फूर्जन्महाः क्रीडद्गुणः प्रौढोद्यत् रम्योद्यत्
द्वादशानामग्रे—प्रौढप्रसर्पत् भ्राजिष्णुलक्ष्मीः भास्वद्विभाव प्रौढप्रभाव स्फुटप्रकाश ।
पञ्चदशानामग्रे—सारद्युति सर्पद्गुण रङ्गद्रुचि तारोद्यत विभ्राजित संशोभित ।
स्रग्धरायां पूर्वं चतुरक्षराणि—स्फारस्फूर्जत् लीलोन्मीलत् सर्पल्लक्ष्मीः प्रोल्लासिश्रीः ।
चतुर्णामग्रे—प्रसर्पत् विराजत् स्फुटश्रीः वरेण्य प्रशस्य प्रधान ।
सप्तानामग्रे—वरतर स्फुटतम प्रसृमर विसृमर विकसित विलसित प्रकटित ।
एकादशानामग्रे—विलसत् विकसत् विचरत् सुभग विमल विशद बहुल रुचिर ।
चतुर्दशानामग्रे—वल्गुवल्गत् चारुचञ्चत् सारसर्पत् प्रौढलक्ष्मीः स्फारशोभ ।
अष्टादशानामग्रे—प्रकामम् नितान्तम् विसर्पत् प्रसर्पत् इत्यादि । ]
एवमन्यच्छन्दःस्वपि ज्ञेयम् ।

दीर्घह्रस्वाक्षरछन्द्गणप्रस्तारतः क्रमात् ।
ज्ञेयाः साधारणाः शब्दाः सर्वच्छन्दोऽभियुक्तये ॥ ४३ ॥

एते शब्दा मत्कृतकाव्यकल्पलतापरिमलात् ज्ञेयाः ।

इति श्रीजिनद० छन्दःसिद्धिप्रताने प्रथमे समान्यशब्दस्तबकस्तृतीयः ।

## अथ वादशिक्षा ।

वादेऽनुप्रासयुक्तोक्तिः स्वोत्कर्षः परगर्हणा ।
कुलशास्त्रादिसंप्रश्नः स्वशाखाध्ययनप्रथा ॥ ४४ ॥

अनुप्रासयुक्तोक्तिर्यथा—

जल्पामि कल्पामितश्रीर्ब्रूमो भ्रूमोटनाश्रिताः ।
वदामि दामि भो जल्पिष्यामि श्यामितशात्रवः ॥
जल्पामोऽनल्पसम्बोधवादसादरनादभृत् ।
एवं शब्दाः सानुप्रासाश्चिन्त्या वादोक्तियुक्तये ॥

[ कियन्तोऽपि सानुप्रासाः शब्दा यथा—

सूरि भूरि पूरित सूरीणाम् दूरि कुरी क्रूरीकृतम् दम्भ जम्भ रम्भ लम्भ भम्भ क्रूर तूर पूर सूर पूरण क्षोभ लोभ प्रेम स्थेम हेम क्षेम हेमया येमया खेमहः ते महान्तः प्राज्ञ मान्य धान्य नान्य तान्यव्यवस्थापयन् भूप स्तूप धूप यूप कूप रूप सूपकार भूम्याम् धूम्याम् अवन्याम् वन्याम् गुर्वी उर्वी उर्वीधर क्षोणी श्रोणी शोणीकृत द्रोणी क्षमायाम् मायाम् छायाम् जायाम् सायान्धतमसम् व्योम सोम रोम स्तोम कोमल लोम कोमया यो महान् उक्ति युक्ति भुक्ति शुक्ति मुक्ति सोहम् मोहम् द्रोहम् दोहम् कोहङ्कारः दोह लौह दोहद सन्देह सन्दोह दुग्ध मुग्ध स्निग्ध विदग्ध दात्र गात्र पात्र क्षात्र नात्र छात्र मात्र शात्रव गोत्र स्तोत्र कोत्र पोत्र योत्र होत्र कुर्याम् माधुर्यम् चातुर्यम् तुर्यम् पुर्याम् काव्यम् श्राव्यम् नाव्यम् क्रव्यम् वाद नाद माद साद सादर छाद शाद यादः पाद अब्द शब्द ध्यान अध्यान ध्मान गान ज्ञान वान स्थान पान भान मान यान घोष जोष तोष दोष शोष पोष लोला कोला कोलाहल गोला दोला तोलन लोलुप मन्द्र चन्द्र तन्द्र चन्द्रमाः सान्द्र पद्र भद्र मद्र वाचः काच प्राचलत् साच वाचि काचित् साचि वाचाल वाचाट प्राचालीत् प्राणी वाणी बाणी पाणी कृत्या भारत्या क्षारत्यागम् भाषा शाखा मावो नावो प्रस्ताव स्थावर दाव पावन भाव राव हाव सरस्वत्या सत्यापितनत्या हत्या पत्या मत्या रत्या गीर्वाण गीर्बाण कविता भविता सविता पविता रचिता पाता नैव दैव सैव धीर कीर क्षीर चीर जीरक तीर नीर वीर सीर हीर कोटीर कुटीर वानीर महीरमण आरब्ध लब्ध स्तब्ध वर्ण कर्ण अर्ण वर्णक तर्णक अर्णक पर्णक अर्णव स्वर्ण पण्डित खण्डित दण्डित मण्डित क्रुद्ध बुद्ध रुद्ध शुद्ध प्रबुद्ध युद्ध उद्धव मालती भारती व्रतती कृती कवि गवि छवि पवि रवि रिक्त सिक्त विविक्त द्वेधा त्रेधा वेधा मेधा मेधावी आतुर चतुर कोत्र क्षेत्र तत्र वेत्र नेत्र येत्र क्षत्र क्षेत्रज क्षेत्रज्ञ धर्म चर्म नर्म शर्म मर्म कर्म धर्म हर्म्य दक्ष कक्ष वक्ष यक्ष पक्ष रक्ष भक्ष कुशलव कल गल दल पल उपल फल बहुल हल गेय जेय देय ज्ञेय धेय नेय पेय हेय मेय विधेय पारीण प्रवीण धुरीण दर्प कर्पर खर्पर तर्पण दर्पण अर्पण सर्पण सर्प तर्प विनद छद पद मद रद गान म्लान स्त्यान दान मान पान खान रान लान भान सर्व गर्व खर्व पर्व चर्वण

अथर्वण अहङ्कार हुङ्कार ओङ्कार आकार कोप गोप आटोप रोप क्रोध बोध योध रोध शोध उत्कर्ष अमर्ष अपकर्ष काय उपाय । ]

स्वोत्कर्षो यथा—

ज्योतिषामिव तिग्मांशुस्ताराणामिव चन्द्रमाः ।
सैन्येशानामिव स्कन्दः कवीनामहमुत्तमः ॥

प्रशंसाहेतोः सारसङ्ग्रहो यथा—

वसूनां पावकश्चन्द्रस्ताराणां, ज्योतिषां रविः ।
रुद्राणां शङ्करो, यक्षरक्षसां धनदोऽपि च ॥
गन्धर्वाणां चित्ररथो, बृहस्पतिः पुरोधसाम् ।
महर्षीणां भृगुमुनिर्देवर्षीणां च नारदः ॥
सैन्येशानां कार्तिकेयो, मरीचिर्मरुतामपि ।
सिद्धानां कपिलो, व्यासो मुनीनां, वेगिनां मरुत् ॥
यादसां वरुणोऽनन्तो नागानां, रूपिणां स्मरः ।
सर्पाणां वासुकिः, शुक्रः कवीनां, नृपतिर्नृणाम् ॥
सर्वशस्त्रभृतां रामः, पाण्डवानां धनञ्जयः ।
सर्वायुधानां दम्भोलिः, पक्षिणां गरुडस्तथा ॥
उच्चैःश्रवास्तुरङ्गाणां गजानामभ्रमूपतिः ।
विद्यानामध्यात्मविद्या गायत्री छन्दसामपि ॥
झषाणां मकरः, सिंहो मृगाणां, कामधुग् गवाम् ।
पर्वतानां मेरुगिरिः, स्थावराणां हिमालयः ॥
नदीनां जन्हुतनया सरसां सरिताम्पतिः ।
अक्षराणामकारश्च भूतानामपि चेतना ॥
वेदानां सामवेदोऽपि मासानां मार्गशीर्षकः ।
यज्ञानां जपयज्ञश्च श्रीवृक्षः सर्वशाखिनाम् ॥
वसन्तः सकलर्तूनामोषधीनां यवोऽपि च ।
तृणानां दर्भो, धातूनां स्वर्णं, खानां(१) मनस्तथा ॥
प्रशस्यः पर्जन्यो भुवनजनने जीवनसृजां
सुधांशुर्धिष्ण्यानां, पवनपथरत्नं द्युतिमताम् ।
गिरीणां स्वर्णाद्रिर्मणिसमुदयानां सुरमणि-
र्द्रुमाणां कल्पद्रुः, सुकविनिवहानामहमहो ॥

इतरेषामपि वर्ण्यानामुत्कर्षायोपमानान्येतानि कल्पनीयानि । यथा—

पीयूषमोषधिषु, शाखिषु कल्पशाखी,
चिन्तामणिर्मणिषु, धेनुषु कामधेनुः ।

---

(१) इन्द्रियाणाम् ।

ध्यानं तपस्सु, सुकृतेषु कृपा, व्रतेषु
 ब्रह्मव्रतं, क्षितिपतित्वमुरीकरोतु ॥
वृषो विषाणप्रहतीस्तनोत्यहो
 जयेहया जम्भनिशुम्भकुम्भिनः ।
मया समं तत्त्वमतत्त्ववित्तमो
 मुधा कृतोन्मादविवादसादरः ॥
त्वयाऽब्धेरारब्धं करचरणचारेण तरणं
 करेणोपक्रान्तं स्थगनकरणं चाऽम्बरमणेः ।
शिरोग्रेण स्वर्गाचलदलनमङ्गीकृतमहो
 मदोग्रेण ध्याता यदिह मम वादेन समता ॥
वदामो यद्दामोदर(१)पदसरिद्वीचिपटल-
 प्रगल्भाभिर्वाग्भिर्भवति मतिहीने सति पुनः ।
तदन्धाग्रे नृत्यं बधिरपुरुषे मन्त्रकरणं
 दृषत्पेषोत्कर्षो गगनहननं मुष्टिनिवहैः ॥
प्रारेभे सिकताकणाशनमिदं प्रोद्दामदावानल-
 ज्वालालिङ्गनमुग्रशेषतरलव्यालावलीखेलनम् ।
सन्तप्तत्रपुपानकर्म भवता यद्विश्वविश्वम्भरा-
 विद्वद्वन्द्यपदद्वयस्य मम भो वादोक्तिरङ्गीकृता ॥
पक्षीन्द्रपक्षैरवतंसकाङ्क्षा स्वर्दन्तिदन्तैः सितकुण्डलाशा ।
गजास्यकुम्भस्थलमौक्तिकौघैर्हारस्पृहा मज्जयमीहसे यत् ॥
हस्तप्रस्तरताडनेन हि कृतः कृष्णाहिरुद्यत्फणः
 सिंहः स्वाङ्घ्रिमहाप्रहारविधिना सुप्तः सुखं बोधितः ।
वातस्याऽभिमुखस्थितेन भवता दावाग्निरुज्ज्वालितो
 वादोन्मादवशंवदेन यदहं साटोपमाकोपितः ॥
जातिः सातिशया तव स्फुरति का श्रीसत्कुलं किं कुलं
 देशः क्लेशनिवेशलेशरहितः कः सुन्दरं किं पुरम् ।
शास्त्रेष्वत्र पवित्रता मतिरपि प्रौढप्ररूढैर्गिरां
 भारैः सारतरं विशारद ! वद प्रीत्यै मम प्रोन्मदः ॥
किं त्वं लक्षणदक्षिणोऽसि किमु वा साहित्यसौहित्यभूः
 छन्दःकन्दलितोऽसि किं च किमु वाऽलङ्कारसारस्थितिः ।
किं वा तर्हि वितर्ककर्कशमनाः किं ज्ञानविज्ञानवान्
 यज्जानासि सभां जयेयमिति भोः सर्वं सगर्वं वद ॥
सर्वव्याकरणार्णवान्तरमपि क्षोभोद्यमैर्निर्मला
 छन्दःप्रारवणोत्थितावपि विधाऽलङ्कारतारप्रभा ।

(१) विष्णुपदम् ।

षट्कर्मीमकरन्दसङ्गसुरभिः स्फूर्जत्कलाशालिनी
　　काप्येषा मम शेमुषी सुमनसां स्वान्तानि हन्तुं क्षमा ॥
अग्रे यस्य न कोऽपि रोपितपदो विद्वान् परप्रातिभ-
　　प्रौढिप्राभृतकीकरोति निभृतं भानोरिवोडुव्रजः ।
सोऽहं मोहतमःप्ररोहदमनः प्रागल्भ्यसम्यक्स्फुर-
　　द्वाग्दीप्तिप्रसरप्रकाशितसुहृद्वृन्दारवृन्दारकः ॥

परगर्हणा यथा—

कृष्णसर्पस्य मण्डूकश्चपेटां दातुमुद्यतः ।
रे मूढ ! यन्मया सार्द्धं विवादं कर्तुमिच्छसि ॥

एवं वृषभः सुरदन्तिनं विषाणैः प्रहर्तुं, द्विपो दन्ताभ्यां गिरिं पातयितुं, शशकः कराभ्यां सिंहस्कन्धकेसरान् क्रष्टुं, मूषकः स्वदन्तैर्मार्जारदंष्ट्रां पातयितुमुद्यत इत्यादि । यथा—

तुलया तोलनं मेरोः करेण स्थगनं रवेः ।
मानं व्योम्नोऽङ्गुलीभिर्यत् प्रेप्सुर्वादेन मज्जयम् ॥

एवं बाहुभ्यामब्धेस्तरणम्, शिरसा गिरेर्भेदः, पद्भ्यां नद्याः प्रतिस्रोतोगतिरित्यादि । यथा—

इदं पाषाणदलनमन्धस्याऽऽलेख्यदर्शनम् ।
मन्त्रणं बधिरैर्मूढ ! त्वया वादं तनोमि यत् ॥

एवं जलविलोडनं, व्योमहननं, निर्द्धनदण्डनं मृगतृष्णायां जलादानमिति । यथा—

खड्गधाराग्रसञ्चारमयश्चणकचर्वणम् ।
अङ्गारशयनं प्रेप्सुर्यस्त्वं मज्जयमीहसे ॥

एवं सिकताकणभुक्तिः, तप्तत्रपुपानं, दावानलज्वालालिङ्गनं, कृष्णसर्पमुखचुम्बनं, व्यालखेलनमित्यादि । यथा—

करेण काङ्क्षसि क्रष्टुं भूस्थः स्वर्गद्रुमञ्जरीम् ।
वादेन यदसौ मूढ ! जिघृक्षुर्मज्जयश्रियम् ॥

एवं शेषशेखरमणिं, गरुडपक्षैरवतंसम्, ऐरावणदन्तैस्ताटङ्कं, कृतान्तमहिषेण पानीयमानयितुं, सिंहदंष्ट्रया कण्डूमपनेतुमित्यादि । यथा—

सुखसुप्तस्त्वा सिंहः पादाघातेन बोधितः ।
यदहं वादवचनाटोपेन परिकोपितः ॥

एवं हस्ताघातेन कृष्णाहिरुत्फणीकृतः, वाताभिमुखस्थितेन दावाग्निर्ज्वालितः, शरीरसौख्याय कपिकच्छूलताऽऽलिङ्गिता, दुर्वासा दुर्वचनैः कोपित इत्यादि ।

कुलशास्त्रादिसम्प्रश्नो यथा—

कस्मिन् कुले तवोत्पत्तिः कुत्र शास्त्रे परिश्रमः ।
कस्मादकस्मात् प्राप्तोऽत्र सर्वमेतत्प्रकाश्यताम् ॥

स्वशास्त्राध्ययनप्रथा यथा—

लक्षणे मम दक्षत्वं साहित्ये संहिता मतिः ।
तर्के कर्कशतात्पर्यं क्व शास्त्रे नास्ति मे श्रमः ॥

इत्याद्यनेकोल्लेखैः सर्वच्छन्दोभिर्वादोऽभ्यसनीयः ।

इति श्रीजिनदत्तसू० छन्दःसिद्धिप्रताने वादस्तबकश्चतुर्थः ॥

अथ वर्ण्यानि कथ्यन्ते तानि यानि कवीश्वरैः ।
महाकाव्यप्रभृतिषु प्रबन्धेषु बबन्धिरे ॥ ४५ ॥
राजाऽमात्यपुरोहितौ नृपवधू राजाङ्गजः सैन्यपो
देशग्रामपुरीसरोऽब्धिसरिदुद्यानान्यरण्याश्रमाः ।
मन्त्रो दूतरणप्रयाणमृगयाश्वेभर्त्विनेन्दूदया
वीवाहो विरहः स्वयंवरसुरापुष्पाम्बुखेला रतम् ॥ ४६ ॥
नृपे विद्या नयः शक्तिर्बलं तस्करताज्जयः ।
प्रजाशास्तिः प्रजारागो धर्मकामार्थतुल्यता ॥ ४७ ॥
प्रयाणरणखड्गादिशास्त्राण्यरिपराजयः ।
अरिनाशोऽरिशैलादिवासोऽरिपुरशून्यता ॥ ४८ ॥
महःश्रीदानकीर्त्याद्या गुणौघा रूपवर्णनम् ।
मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः ॥ ४९ ॥
महामात्ये नयः शास्त्रं स्थैर्यं बुद्धिर्गभीरता ।
शक्तिः शस्त्रमलोभत्वं जनरागो विवेकिता ॥ ५० ॥
मन्त्री भक्तो महोत्साहः कृतज्ञो धार्मिकः शुचिः ।
अकर्कशः कुलीनश्च स्मृतिज्ञः सत्यभाषकः ॥ ५१ ॥
विनीतः स्थूल(१)लक्षश्चाऽव्यसनो वृद्धसेवकः ।
अक्षुद्रः सत्त्वसम्पन्नः प्राज्ञः शूरोऽचिरक्रियः ॥ ५२ ॥
राज्ञा परीक्षितः सर्वोपधासु निजदेशजः ।
राजार्थस्वार्थलोकार्थकारको निस्पृहः शमी ॥ ५३ ॥
अमोघवचनः कल्पः पालिताशेषदर्शनः ।
पात्रौचित्येन सर्वत्र नियोजितपदक्रमः ॥ ५४ ॥
आन्वीक्षिकीत्रयीवार्तादण्डनीतिकृतश्रमः ।
क्रमागतो वणिक्पुत्रो भवेद्राज्यविवृद्धये ॥ ५५ ॥

कुलकम्—

पुरोहिते स्मृतिर्वेदा निमित्तापत्प्रतिक्रिया ।
दण्डनीतिज्ञता शुद्धधर्मशीलकुलक्रमाः ॥ ५६ ॥

---

( १ ) वदान्यः ।

देव्यां विज्ञानचातुर्यं त्रपाशीलव्रतादयः ।
रूपलावण्यसौभाग्यप्रेमश्रृङ्गारमन्मथाः ॥ ५७ ॥
वेणीधम्मिल्लसीमन्तभालश्रवणनासिकाः ।
कपोलाऽधरनेत्रभ्रूकटाक्षदशनोक्तयः ॥ ५८ ॥
कण्ठबाहुकरोरोजनाभ्यो मध्यं वलित्रयम् ।
रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात् ॥ ५९ ॥
कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः ।
बाह्याली खुरली(१) राजभक्तिः सुभगतादयः ॥ ६० ॥
सेनापतौ महोत्साहः स्वामिभक्तिः सुधीरभीः ।
अभ्यासो वाहने शास्त्रे शस्त्रे च विजयो रणे ॥ ६१ ॥
देशे बहुखनिद्रव्यपण्यधान्याकरोद्भवाः ।
दुर्गग्रामजनाधिक्यनदीमातृकतादयः ॥ ६२ ॥
ग्रामे धान्यलतावृत्तसरसीपशुपुष्टयः ।
क्षेत्राऽरघट्टकेदारग्रामेयीमुग्धविभ्रमाः ॥ ६३ ॥
पुरेऽट्टपरिखःवप्रप्रतोलीतोरणालयाः ।
प्रासादाऽध्वप्रपाऽऽरामवापीवेश्यासतीत्वरी ॥ ६४ ॥
सरस्यम्भोलहर्यम्भोगजाद्यम्बुजषट्पदाः ।
हंसचक्रादयस्तीरोद्यानस्त्रीपान्थकेलयः ॥ ६५ ॥
अब्धौ द्वीपाद्रिरत्नोर्मिपोतयादोजगत्प्लवाः ।
विष्णुकुल्यागमश्चन्द्राद् वृद्धिरौर्वोऽब्दपूरणम् ॥ ६६ ॥
सरित्यम्बुधियायित्वं वीच्यो जलगजादयः ।
पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥ ६७ ॥
उद्याने सरणिः सर्वफलपुष्पलताद्रुमाः ।
पिकाऽलिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः ॥ ६८ ॥
शैले मेघौषधीधातुवंशकिंनरनिर्झराः ।
श्रृङ्गपादगुहारत्नवनजीवाऽध्युपत्यका ॥ ६९ ॥
अरण्ये हि वराहेभयूथसिंहादयो द्रुमाः ।
काकोलूककपोताद्या भिल्लभल्लदवाद्रयः ॥ ७० ॥
आश्रमेऽतिथिपूजैणविश्वासो हिंस्रशान्तता ।
यज्ञधूमो मुनिसुता द्रुसेको वल्कलद्रुमाः ॥ ७१ ॥
मन्त्रे पञ्चाङ्गता शक्तिः षाड्गुण्योपायसिद्धयः ।
उदयाश्चिन्तनीयाश्च स्थैर्योन्नत्यादिसूक्तयः ॥ ७२ ॥
दूते स्वस्वामितेजःश्रीर्विक्रमौन्नत्यकृद्वचः ।
शत्रुक्षोभकरी चेष्टा धार्ष्ट्यं दाक्ष्यमभीरुता ॥ ७३ ॥

---

(१) खुरली=सैनिकशिक्षणाभ्यासः ।

युद्धे तु वर्मबलवीररजांसि तुर्य-
विश्वासनादशरमण्डपरक्ततनद्यः ।
छिन्नातपत्ररथचामरकेतुकुम्भी-
मुक्तासुरीवृतभटामरपुष्पवर्षाः ॥ ७४ ॥
प्रयाणे भेरिनिस्वानभूकम्पबलधूलयः ।
करभोक्षध्वजच्छत्रवणिक्शकटवेसराः ॥ ७५ ॥
मृगयायां श्वसंचारो वागुरा नीलवेषता ।
भटढक्का मृगत्रासः सिंहयुद्धं त्वरागतिः ॥ ७६ ॥
अश्वे खरखुरोत्खातरजः सल्लक्षणस्थितिः ।
गतिर्वेगवती वक्रमास्यं धाराप्रपञ्चनम् ॥ ७७ ॥
गजे सहस्रयोधित्वमुच्चत्वं कर्णचापलम् ।
अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः ॥ ७८ ॥
सुरभौ दोला कोकिलमारुतसूर्यगतितरुदलोद्भेदाः ।
जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः ॥ ७९ ॥
ग्रीष्मे पाटलमल्लीतापसरःपथिकशोषवातात्यः ।
सक्तुप्रपाप्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः ॥ ८० ॥
वर्षासु घनशिखिस्मयहंसगमाः पङ्ककन्दलोद्भेदौ ।
जातीकदम्बकेतकझञ्झाऽनिलनिम्नगा हलिप्रीतिः ॥ ८१ ॥
शरदीन्दुरविपटुत्वं जलाच्छताऽगस्तिहंसवृषदर्पाः ।
सप्तच्छदपद्मसिताभ्रधान्यशिखिपक्षमदपाताः ॥ ८२ ॥
हेमन्ते दिनलघुता शीतयवस्तम्बमरुवकहिमानि ।
शिशिरे शिरीषधूमाहिकुन्दाम्बुजदाहशिखिरतोत्कर्षाः ॥ ८३ ॥
सूर्येऽरुणता रविमणिचक्राम्बुजपथिकलोचनप्रीतिः ।
तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुलटार्तिः ॥ ८४ ॥
चन्द्रे कुलटाचक्राम्बुजमानविरहितमोहानिरौज्ज्वल्यम् ।
जलधिजननेत्रकैरवचकोरचन्द्राश्मदम्पतिप्रीतिः ॥ ८५ ॥
विवाहे स्नानशुभ्राङ्गभूषोलूलत्रयीरवाः ।
वेदी सीमन्ततारेक्षालाजा मङ्गलवर्तनम् ॥ ८६ ॥
विरहे तापनिश्वासचिह्ना मौनं कृशाङ्गता ।
अब्जशय्या निशादैर्घ्यं जागरः शिशिरोष्मता ॥ ८७ ॥
स्वयंवरे शचीरक्षा मञ्चमण्डपसज्जता ।
राजपुत्री नृपाकारान्वयचेष्टाप्रकाशनम् ॥ ८८ ॥
सुरापाने विकलता स्खलनं वचने गतौ ।
लज्जा मानच्युतिः प्रेमाधिक्यं रक्तेक्षणभ्रमाः ॥ ८९ ॥
पुष्पावचये पुष्पावचयः पुष्पार्पणार्थने दयिते ।

मानाद्यं गोत्रस्खलनेर्ष्या वक्रोक्तिसम्भ्रमाश्लेषाः ॥ ९० ॥
जलकेलौ सरःक्षोभश्चक्रहंसापसर्पणम् ।
पद्मग्लानिपयोबिन्दुदृग्रागा भूषणच्युतिः ॥ ९१ ॥
सुरते सात्त्विका भावाः सीत्कारः कुड्मलाक्षता ।
काञ्चीकङ्कणमञ्जीररवोऽधरनखक्षते ॥ ९२ ॥
वर्ण्येषु वर्ण्यभावानां दिङ्मात्रमिति कीर्तितम् ।
चिद्रूपैश्चिन्त्यमानानां भवत्येषामनन्तता ॥ ९३ ॥
असतोऽपि निबन्धेनाऽनिबन्धेन सतोऽपि च ।
नियमेन च जात्यादेः कवीनां समयस्त्रिधा ॥ ९४ ॥

असतोऽपि निबन्धो यथा—

रत्नादि यत्र तत्राऽद्रौ हंसाद्यल्पजलाशये ।
जलेभाद्यं नभोनद्यामम्भोजाद्यं नदीष्वपि ॥ ९५ ॥
तिमिरस्य तथा मुष्टिग्राह्यं सूचीविभेद्यताम् ।
अञ्जलिग्राह्यता कुम्भोपवाह्यत्वे विधुत्विषः ॥ ९६ ॥
शुक्लत्वं कीर्तिहासादौ कार्ष्ण्यं दुष्कीर्त्यघादिषु ।
प्रतापे रक्ततोष्णत्वे रक्तत्वं क्रोधरागयोः ॥ ९७ ॥
विभावर्यां भिन्नतटाश्रयणं चक्रवाकयोः ।
ज्योत्स्नापानं चकोराणां वर्णयेदसदप्यदः ॥ ९८ ॥

चतुर्भिः कलापकम् ।

सतोऽप्यनिबन्धो यथा—

वसन्ते मालतीपुष्पं फलं पुष्पं च चन्दने ।
अशोके च फलं ज्योत्स्नाध्वान्ते कृष्णान्यपक्षयोः ॥ ९९ ॥
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तताम् ।
प्रियङ्गुपुष्पे पीतत्वं सरोजमुकुलादिषु ॥ १०० ॥
हरितत्वं दिवा नीलोत्पलानां स्मेरता दिवा ।
शेफालिकासुमे भ्रंशं वर्णयेन्न सदप्यदः ॥ १०१ ॥

त्रिभिर्विशेषकम् ।

नियमो यथा—

मुक्तास्ताम्रपर्ण्यामेवाऽब्धिष्वेव मकरानपि ।
भूर्जद्रून् हिमवत्येव मलये ह्येव चन्दनम् ॥ १०२ ॥
सामान्यग्रहणे वारिमुचां कृष्णत्वमेव हि ।
रक्तत्वमेव रत्नानां पुष्पाणां शौक्ल्यमेव च ॥ १०३ ॥
तथा वसन्त एवान्यभृतानां ध्वनितोद्भवम् ।
वर्षास्वेव मयूराणां रुतं नृत्तं च वर्णयेत् ॥ १०४ ॥

त्रिभिर्विशेषकम् ।

नियमविशेषो यथा—

नीलकृष्णयोर्हरितकृष्णयोस्तथा श्यामकृष्णयोः ।
पीतपाटलयोः शुक्लगौरयोर्नागसर्पयोः ॥ १०५ ॥
महार्णवसागरयोः क्षीरक्षारसमुद्रयोः ।
कमलासम्पदोः कामध्वजे मकरमत्स्ययोः ॥ १०६ ॥
द्वादशानामप्यर्काणां वार्ध्यत्रिदृग्जचन्द्रयोः ।
चन्द्रे शशैणयोर्विष्णुशेषकूर्मादिकस्य च ॥ १०७ ॥
नारायणदामोदरमाधवप्रभृतेरपि ।
दानवासुरदैत्यानामैक्यमेवाऽभिसंमतम् ॥ १०८ ॥
चतुर्भिः कलापकम् ।
दानवास्तु विप्रचित्तिः शम्बरो नमुचिस्तथा ।
पुलोमादयोऽथ दैत्या हिरण्याख्यो विरोचनः ॥ १०९ ॥
बाणो हिरण्यकशिपुर्बलिप्रह्लादकादयः ।
अथाऽसुरा वृषपर्वबलवृत्रादयः स्मृताः ॥ ११० ॥
स्त्रीणामक्ष्णः कटाक्षाणां शुक्लता कृष्णताऽथवा ।
कृष्णताप्यथवा शुक्लश्यामता शुक्लकृष्णता ॥ १११ ॥
बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता ।
मनोभवस्य मूर्त्तत्वममूर्त्तत्वं च वर्ण्यते ॥ ११२ ॥
देवदेवीस्थितिं विद्यान्नायिकानायकक्रमम् ।
स्वभावान् सर्वजीवानां व्यवस्थां देशकालयोः ॥ ११३ ॥

एतत्श्लोकोक्तभावान् वर्ण्यानां विशेषान्तराणि कविसमयोदाहरणानि मत्कृतकाव्यकल्पलतापरिमलात् ज्ञेयानि । स्तबकोऽयं गतार्थः ॥

इति श्रीजिनदत्त० वर्ण्यस्थितिस्तबकः पञ्चमः ॥

समाप्तश्चाऽयं छन्दःसिद्धिप्रतानः प्रथमः ॥

## अथ शब्दसिद्धिप्रतानः ।

तत्र पूर्वं रूढयौगिकमिश्रशब्दाख्यानं यथा—

रूढयौगिकमिश्राख्यास्त्रिधा शब्दाः प्रकीर्तिताः ।
व्युत्पत्तिवर्जिता रूढाः शब्दा आखण्डलादयः ॥ १ ॥

प्रकृतिप्रत्ययविभागेनाऽर्थरहिता व्युत्पत्तिवर्जिताः, शब्दा इत्यनुवाद्यनिर्देशः, रूढा इति विधेयपदम्, आखण्डलादय इत्युदाहरणम् । न ह्यत्र प्रकृतिप्रत्ययविभागेन व्युत्पत्तिरस्ति, आदिशब्दान्मण्डपादयः । यद्यपि "नाम च धातुज"मिति शाकटायनमतेन रूढा अपि व्युत्पत्तिभाजस्तथापि वर्णानुपूर्व्यनुज्ञानमात्रप्रयोजना तेषां व्युत्पत्तिः, न पुनरन्वर्थोऽर्थप्रवृत्तौ कारणमिति रूढा अव्युत्पन्ना एव ।

यौगिकान् शब्दान् व्याचष्टे—

योगो गुणेन क्रियया सम्बन्धेन कृतोऽन्वयः ।

शब्दानां परस्परमर्थानुगमनमन्वयः संयोगः । गुणक्रियाकृतयोगेन यौगिकानामुदाहरणम् ॥

गुणाः स्युर्नीलपीतादिनीलकण्ठादयस्ततः ॥ २ ॥

ततो गुणतो गुणनिबन्धनो येषां योगस्ते शब्दा नीलकण्ठाद्याः नीलः कण्ठोऽस्येति गुणप्राधान्यान्नीलकण्ठः शङ्करः, आदिशब्दाच्छितिकण्ठः कालकण्ठ इत्यादि । सङ्ख्यापि गुण एवेति वैशेषिकमते पञ्चबाणषण्मुखाऽष्टश्रवोदशमुखादयः । ततः कारणात्पञ्चबाणादयोऽपि गुणनिबन्धनयोगाः ॥

क्रियाः करोतिप्रमुखास्ततः स्रष्टृक्रिया मताः ।

ततः क्रियातः क्रियानिबन्धनो योगो येषान्ते स्रष्टृप्रभृतयः । सृजतीति सर्जनप्राधान्यात् स्रष्टा ब्रह्मा । एवं धातेत्यादयः ।

सम्बन्धं व्याचष्टे—

सम्बन्धः स्वस्वामित्वादिस्तत्राहुर्नाम तद्वताम् ।

स्वान्नेतृपतिभुक्पालधनमत्त्वर्थकादयः ॥ ३ ॥

स्वमात्मीयं, स्वामी यस्तत्र प्रभविष्णुस्तयोर्भावः स्वस्वामित्वं, तदादिः सम्बन्धः आदिशब्दाज्जन्यजनकभावादिसम्बन्धः, तत्र स्वस्वामिभावसम्बन्धे नेतृप्रमुखाः शब्दाः स्वात्परे नियोजितास्तद्वतां स्वामिनां नामाऽऽहुः । मत्वर्थक इति । मतुस्तद्धितस्तस्यार्थोऽस्त्यस्मिन्निति मतुप्प्रत्ययविधानात् मतोरर्थो यस्य मत्वर्थकस्तद्धितो मतुना समानार्थ इत्यर्थः, स च इजणिकादिः । न केवलं मत्वर्थक एव मत्वर्थाव्यभिचारान्मतुरपि । आदिशब्दात्पाऽऽदयोऽपि । 'तत्राहुर्नाम तद्वता'मित्युत्तरेष्वप्यनुवर्तनीयम् ।

क्रमेणोदाहरणमाह—

भूनेता भूपतिर्भूभुक् भूपालो भूधनस्तथा ।

भूमांश्चेति कवे रूढ्या ज्ञेयोदाहरणावली ॥ ४ ॥

इतिशब्दः प्रकारार्थस्तेन भूपादयोऽपि । कवीनां रूढिः परम्परायाता प्रसिद्धिस्तया न तु कविरूढ्यतिक्रमेण । यथा कपालीत्यादौ सत्यपि स्वस्वामिभावसम्बन्धे कपाली मत्वर्थीयान्त एव भवति, न तु कपालपालः कपालधनः कपालभुक् कपालनेता कपालपतिरित्यादि ।

जन्यजनकभावसम्बन्धे यथा—

जन्याद्विधातृकरसूकृत्कर्तृस्रष्टृसृड्जनकमुख्याः ।

जनकाद्योनिजजनिभूसंभवरुहसूत्यणाद्यास्तु ॥ ५ ॥

जन्यात्कार्यात्परे विधातृप्रभृतयस्तद्वतां जनकानां कारणानां नामाहुः । यथा— विश्वविधाता विश्वकरः विश्वसूर्विश्वकृत् विश्वकर्ता विश्वस्रष्टा विश्वसृट् विश्वजनको ब्रह्मा तस्य हि जन्यं विश्वमिति रूढिः । मुख्यशब्द आद्यर्थस्तेन विश्वकारक इत्याद्यपि । कविरूढिरित्येव । न हि यथा चित्रकृदुच्यते तथा चित्रसूरिति । तथा जनकात्परे

योन्यादयः शब्दास्तद्वतां कारणवतां कार्याणां नामाहुः । यथा आत्मयोनिः आत्मजः आत्मजनिः आत्मभूः आत्मसम्भवः आत्मरुहः आत्मसुतिर्ब्रह्मा, तस्य हि आत्मा कारणमिति रूढिः । वक्ष्यमाणस्याद्यशब्दस्याभिसम्बन्धादात्मजन्मादयोऽपि । अणादयस्तु भृगोरपत्यं भार्गवः, दितेरपत्यं दैत्यः, वत्सस्यापत्यं वात्स्यायन इत्यादि । अत्रापि हि भार्गवादीनां भृग्वादयो जनका इति रूढिः । कविरूढ्येत्येव । न ह्यात्मयोनिवदात्मजनक आत्मकारक इति भवेत् ।

धार्यधारकभावसम्बन्धे यथा—

धार्यात् ध्वजास्त्रपाण्यङ्कमौलिभृन्मण्डनसमानाः ।
धरभर्तृमालिमत्वर्थशालिशेखरसदृक्षाश्च ॥ ६ ॥

धार्यवाचकात्परे ध्वजादयः शेखरान्ता धारकस्य नामाहुः । यथा—वृषध्वजः शूलास्त्रः पिनाकपाणिः वृषाङ्कः चन्द्रमौलिः शूलभृत् शशिमण्डनः । समानग्रहणात्सदृशार्थाः । वृषकेतनः शूलायुधः वृषलक्ष्मा चन्द्रशिराः चन्द्रभूषणः चन्द्राभरणादयो गृह्यन्ते । यथा—गङ्गाधरः पिनाकभर्ता पिनाकमाली, पिनाकं मालते धारयतीति कृतत्वात्, शूली पिनाकशाली शशिशेखरः । कविरूढ्येत्येव, तेन सत्यपि धार्यधारकसम्बन्धे न सर्वेभ्यो धार्येभ्यो ध्वजाद्यर्थाः शब्दाः प्रयोज्याः । न हि भवति वृषध्वजवच्छूलध्वजः शूलास्त्रवत् चन्द्रास्त्रः पिनाकपाणिवदहिपाणिः वृषाङ्कवच्चन्द्राङ्कः चन्द्रमौलिवद् गङ्गामौलिः शशिमण्डनवत् चन्द्रमण्डनः गङ्गाधरवच्चन्द्रधरः पिनाकभर्तृवच्चन्द्रभर्ता पिनाकमालिवत्सर्पमाली शूलिवच्छूलवान् शूलशालिवत् चन्द्रशाली चन्द्रशेखरवद्गङ्गाशेखर इति ।

भोज्यभोजकभावसम्बन्धे यथा—

भोज्याद् भुग्लिट्पाय्यन्धोव्रतपाशाशनप्रमुखाः ।

भोज्यं भक्ष्यं तद्वाचिनः शब्दात्परे भुगादयः शब्दास्तद्वतां भोज्यवतां भोक्तृणां नामाहुः । यथा—अमृतभुजः अमृतलिहः अमृतपायिनः अमृतान्धसः अमृतव्रताः अमृतपाः अमृताशाः अमृताशना देवास्तेषां ह्यमृतं भोज्यमिति रूढिः । प्रमुखशब्दस्तत्समानार्थभोजनादिशब्दपरिग्रहाय । कविरूढ्येत्येव । न हि यथाऽमृतभुजस्तथाऽमृतवल्लभा इति भवति ।

पतिकलत्रभावसम्बन्धे यथा—

पत्युः कान्ता दयिता वधूः प्रणयिनी प्रियाऽङ्गना तुल्याः ।
पत्न्याः प्रणयिप्रियवररमणप्राणेश्वरेशसमाः ॥ ७ ॥

पतिर्वरयिता तद्वाचकाच्छब्दात् परे कान्तादिसदृशाः शब्दास्तद्वतीनां पतिमतीनां भार्याणां नामाहुः । यथा—शिवकान्ता शिवदयिता शिववधूः शिवप्रणयिनी शिवप्रिया शिवाङ्गना गौरी, तस्या हि शिवः पतिरिति रूढिः । तुल्यग्रहणाद्रमणीवल्लभाप्रभृतयो गृह्यन्ते । कविरूढ्येत्येव । न हि भवति यथा शिवकान्ता तथा शिवपरिग्रह इति । तथा पत्नीवाचकाच्छब्दात्परे प्रणयिप्रमुखाः शब्दास्तद्वतां कलत्रवतां वरयितॄणां नामाऽऽहुः । यथा—गौरीप्रणयी गौरीप्रियः गौरीवरः गौरीरमणः गौरीप्राणेश्वरः गौरीशः

शिवस्तस्य हि गौरी कलत्रमिति रूढिः । रमशब्दात्समानार्थाः पत्यादिशब्दा गृह्यन्ते । कविरूढ्येत्येव । न हि यथा गौरीवरः शिवः तथा गङ्गावर इति ।

सख्युः सम्बन्धे यथा—

सख्युः सखिप्रभृतयः

सखिवाचकाच्छब्दात्परे सखिसमानार्थास्तद्वतां सखिवतां नामाहुः । यथा— श्रीकण्ठस्य सखा श्रीकण्ठसखः कुबेरः, मधुसखः कामः । प्रभृतिग्रहणात्सुहृदादयो गृह्यन्ते । कविरूढ्येत्येव । न हि भवति यथा श्रीकण्ठसखो धनदस्तथा धनदसखः श्रीकण्ठ इति ।

वाह्यवाहकसम्बन्धे यथा—

वाह्याद्यानासनप्रायाः ।

वाह्यवाचिनः शब्दात् परे यानादयस्तद्वतां वाह्यवतां वाहयितॄणां नामाहुः । यथा—वृषयानः वृषासनः शंभुः, तस्य हि वृषो यानमिति रूढिः । प्रायःशब्दात् वृषगामी वृषवाहन इत्यादयोऽपि । कविरूढ्येत्येव । नहि भवति यथा नरवाहनः कुबेरः तथा नरगामी नरयान इत्यादि ।

ज्ञातेयसम्बन्धे यथा—

ज्ञातेः स्वसृदुहित्रात्मजाऽग्रजाऽवरजसङ्काशाः ।

ज्ञातिः स्वजनस्तद्वाचिनः शब्दात्परे स्वस्रादयस्तद्वतां ज्ञातेयवतां ज्ञातीनां नामाहुः । स्वस्रादीनां ज्ञातिविशेषवाचित्वात् ज्ञातिविशेषादेव प्रयोगो यथा—यमस्वसा यमुना, हिमवदुहिता गौरी, चन्द्रात्मजो बुधः, गदाग्रज, इन्द्रावरजश्च विष्णुः । यमादयो हि यमुनादीनां भ्रात्रादिज्ञातय इति रूढिः । संकाशशब्दात् सोदरादयो गृह्यन्ते । यथा कालिन्दीसोदरो यमः । कविरूढ्येत्येव । न हि भवति यथा यमुना यमस्वसा तथा शनिस्वसापि ।

आश्रयाश्रयिभावसम्बन्धे यथा—

आश्रयतः सदनाख्याः सद्वासिशयप्रकाराश्च ॥ ८ ॥

आश्रयो निवासः तद्वाचिनः शब्दात् परतः सदननामानि तथा सदनादयस्तद्वतामाश्रयवतामाश्रितानां नामाहुः । यथा—द्युसदना, द्युसद्मानो देवाः । दिवौकसः, दिवशब्दोऽकारान्तोऽप्यस्ति-इति । द्युवसतयः दिवाश्रयाः द्युसदः द्युनिवासिनः द्युशया देवाः । द्यौः स्वर्गः स च तेषामाश्रय इति रूढिः । कविरूढ्येत्येव । न हि भवति यथा- द्युसद्मानस्तथा भूमिसद्मानो मनुष्या इति ।

वध्यवधकभावसम्बन्धे यथा—

वध्याद् भिद्जिद्घातिद्वेषिध्रुड्ध्वंसिशासनविपक्षाः ।
अप्यन्तकारिसूदनदर्पच्छिद्दमनदारिमथनाद्याः ॥ ९ ॥

वध्यो घात्यस्तद्वाचिनः शब्दात परे भिदादयः अन्तकादयोऽपि तद्वतां वधकानां नामाहुः । यथा—पुरभित् पुरजित् पुरघाती पुरद्वेषी पुरध्रुक् पुरध्वंसी पुरशासनः पुरविपक्षः पुरान्तकारी पुरसूदनः पुरदर्पच्छित् पुरदमनः पुरदारी पुरमथनः शिवः, तस्य हि पुरो

वध्य इति रूढिः । आदिशब्दात् पुरनिहन्ता पुरकेतुः पुरहा पुरान्तकः पुरजयीति । वध्य इति वधार्हमात्रेऽपि, तेन कालियदमनः कालियारिः कालियशासनो विष्णुरित्यादयोऽपि गृह्यन्ते । कविरूढ्येत्येव । तेन कालियदमनादिवत् कालियघातीति न भवति ।

उक्ताः स्वस्वामित्वादयः सम्बन्धभेदाः, ते च यथा भिन्नद्रव्याश्रयास्तथैकद्रव्याश्रया अपि भवन्तीति दर्शयितुमाह—

सम्बन्धोऽपि विवक्षात इति पदादेकतोऽपि संयोज्याः ।
औचित्याद्विबुधैः प्राग्दर्शितसम्बन्धिशब्दास्ते ॥ १० ॥

विवक्षानिबन्धनो हि सम्बन्धस्ततः एकस्मादपि वृषादेः सम्बन्धिपदात् परे सम्बन्धान्तरनिबन्धा वाहनादयः शब्दा यथौचित्यं प्रयुज्यन्ते ।

एतदेवाह—

वृषस्य सति वाह्यत्वे शङ्करो वृषवाहनः ।
धार्यत्वे तु वृषाङ्कोऽयं स्वत्वे वृषपतिस्तु सः ॥ ११ ॥
धार्यत्वेंऽशोरंशुमाली सत्त्वे तु रविरंशुमान् ।
अहेर्वध्यत्वे हि रिपुर्भोज्यत्वे बर्हिणोऽहिभुक् ॥ १२ ॥

वाह्यवाहकभावसम्बन्धविवक्षायां यथा वृषवाहनो रुद्र इति भवति तथा धार्यधारकभावसम्बन्धविवक्षायां वृषलाञ्छनः, स्वस्वामिभावसम्बन्धविवक्षायां वृषपतिरित्यपि । तथा धार्यधारकभावसम्बन्धविवक्षायां यथा अंशुमाली रविरिति भवति तथा स्वस्वामिभावसम्बन्धविवक्षायाम् अंशुपतिः अंशुमानित्यपि । तथा वध्यवधकभावसम्बन्धे यथा अहिरिपुर्मयूरस्तथा भोज्यभोजकभावसम्बन्धे अहिभुगित्यपि भवति ।

सम्बन्धनिबन्धां व्युत्पत्तिमुक्त्वा व्युत्पत्त्यन्तरमाह—

व्यक्तचिन्हाङ्कितो जातिशब्दोऽपि व्यक्तिवाचकः ।
यथाऽगस्तिनिवासा दिक् दक्षिणाशा प्रकीर्त्यते ॥ १३ ॥

व्यक्तं निःसन्देहं यच्चिन्हं तेन चिन्हितो जात्यभिप्रायकोऽपि शब्दो व्यक्तेर्वाचको भवति । व्यक्तेर्नामतां यातीत्यर्थः । यथाऽगस्तेर्मुनिविशेषस्य निवासो यस्यां सा इति व्यक्तं निस्सन्देहं चिन्हं तेन चिन्हिता दिगिति जातिशब्दो दक्षिणाशाया व्यक्तेरभिधायी भवति । एवं सप्तर्षिपूता दिगुत्तराशा, अत्रेर्नयनसमुत्थं ज्योतिश्चन्द्र इत्यादयोऽपि ।

व्युत्पत्त्यन्तरमाह—

शब्दौ त्रिपञ्चसप्तादिवाचकौ विषमायुजौ ।
योजयेत् त्रिनेत्रपञ्चशरसप्तच्छदादिषु ॥ १४ ॥

त्रिपञ्चसप्तादिस्थाने विषम-अयुक्शब्दौ त्रिनेत्रादिपदेषु योजनीयौ । यथा—त्रिनेत्रो विषमनेत्रोऽयुग्नेत्रश्च शंभुः, पञ्चशरो विषमशरोऽयुक्शरश्च कामः, सप्तच्छदो विषमच्छदोऽयुक्च्छदश्च सप्तपर्णः ।

व्युत्पत्त्यन्तरमाह—

इतरान्तो नञ्पूर्वो गुणशब्दोऽर्थविरोधनं वक्ति ।
यद्वत् सितेतरोऽसित एवं प्रतिपद्यते कृष्णः ॥ १५ ॥

गुणवाची शब्द इतरशब्दान्तो नञ्पूर्वश्च विरोधिनमर्थमभिधत्ते । यथा—सितेतरोऽसितश्च कृष्णः, एवं कृशेतरोऽकृशश्च स्थूल इत्यादि ।

व्युत्पत्त्यन्तरमाह—

जलदादिषु पूर्वपदे सरोजमुख्येषु चोत्तरपदेषु ।
सुरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः ॥ १६ ॥

जलदादिषु शब्देषु पूर्वस्मिन्नेव पदे पर्यायपरिवर्तनम् । यथा जलदस्तोयदो नीरदः । आदिग्रहणात् जलधिस्तोयधिर्नीरधिरित्यादि । सरोजमुख्येषु शब्देषु उत्तरस्मिन्नेव पदे पर्यायपरिवर्तनम् । यथा सरोजं सरोरुहम् । मुख्यशब्दाद् वडवाग्निर्वडवानलो वडवावन्हिरित्यादि । सुरपतिसदृशेषु पूर्वोत्तरपदेषु पर्यायपरिवर्तनम् । यथा—सुरपतिः देवराजः त्रिदशेश्वरः । समशब्दाद्भूपतिर्महीपतिः भूभुक् महीभुगित्यादि ।

इति परिवृत्तिसहा ये योगात्ते यौगिकाः शब्दाः ।
परिवृत्त्यसहा ये ते मिश्रा गीर्वाणतुल्यास्तु ॥ १७ ॥

इत्येवं पूर्वोत्तरत्रोभयत्र च पदे परिवृत्तिः पर्यायपरिवर्तनं सहन्ते क्षमन्ते परिवृत्तिसहा ये ते जलदादयो योगादन्वयाद्भवेयुरिति यौगिकाः । गीर्वाणादयः शब्दाः पुनः पूर्वोत्तरत्रोभयत्र पदे पर्यायपरिवृत्तिमसहमाना मिश्राः । को भावः ? योगयुक्ताः रूढिमन्तश्च । तुल्यग्रहणात् कृतान्तदशरथप्रभृतयः ।

इति श्रीजिन० शब्दसिद्धिप्रताने द्वितीये रूढयौगिकमिश्राख्यः प्रथमस्तबकः ॥

---

## अथ योगार्हनामानि ।

भवन्ति यौगिकाः शब्दाः समासव्याससहेतवः ।
तद्योगार्हाणि नामानि कत्यपि प्रतिपादये ॥ १८ ॥
उद्देशवचनं पूर्वं सप्तम्यन्तमिहोदितम् ।
पञ्चम्यन्तं पूर्वपदं प्रथमान्तं पुरः पदम् ॥ १९ ॥
शब्दः स एक एवाऽत्र स्यादेकवचनात् कृतात् ।
बहवो बहुवचनान्मुख्याद्यादेस्तदर्थकाः ॥ २० ॥
स्वर्गे सुरेभ्यो गेहानि देवे द्युभ्यः सदादयः ।
स्वाहास्वधाभ्याञ्च सुधा क्रतुभ्योऽपि भुगादयः ॥ २१ ॥
दैत्येभ्योऽरयोऽर्के सहस्रात् खरप्रभृतेरपि ।
उष्णेभ्यश्चांशवश्चक्राऽब्जद्दिनेभ्योऽपि बान्धवः ॥ २२ ॥
ध्वान्तेभ्यो रिपवो गोद्युपद्मिनीभ्यो ग्रहादिनाः ।
प्रभाविभाभासोदिवादिनाहर्दिवसात् करः ॥ २३ ॥
नभोदिनेभ्यो रत्नानि गगनेभ्योऽध्वजाऽध्वगाः ।
सप्तादेरश्वा अरुणेऽर्केभ्यः सारथयस्तथा ॥ २४ ॥

विनतायाः सूनवस्तु गरुडेभ्योऽग्रजाः पुनः ।
जैवातृके तु कुमुदात् कैरवादपि बान्धवः ॥ २५ ॥
शशात्कलायाश्छायाया मृगेभ्योऽपि भृदादयः ।
तारानिशाकुमुदिनीकौमुदीभ्यो द्विजाननाः ॥ २६ ॥
ओषध्यादक्षजायाश्च रोहिण्याश्च प्रियादयः ।
सुधाश्वेतहिमेभ्यो भा निशाभ्यो मणयः करः ॥ २७ ॥
इन्द्रे सहस्रनेत्राणि शतात्तु क्रतवोऽपि च ।
वज्रेभ्यः पाणिप्रमुखाः केशवेभ्योऽग्रजाः पुनः ॥ २८ ॥
त्रिदिवेभ्यः स्वः पुरीभ्यः सुधर्मायाः सुरादिनः ।
पौलोमीभ्यः पूर्वदिग्भ्योऽप्सरोभ्यः पतिसन्निभाः ॥ २९ ॥
जम्भात्पाकाद्बलात् वृत्रात्पुलोम्नो नमुचेरपि ।
अद्रिभ्यः शासनसमा जयन्ताज्जनकादयः ॥ ३० ॥
वन्हौ धूमात् ध्वजाद्धव्यहविर्हुताद्भुगादयः ।
ज्वालाभ्यः सप्तादेर्मन्त्रजिह्वासप्तादितोऽर्चिषः ॥ ३१ ॥
स्वाहाया वल्लभा और्वे वडवायाश्च वन्हयः ।
यमे दण्डादस्त्रमुखा महिषेभ्यो ध्वजादयः ॥ ३२ ॥
कालिन्दीभ्यः सोदरास्तु धूमोर्णायाः प्रियादयः ।
दक्षिणाशाभ्यः प्रेतेभ्यः पितुश्च पतयो मताः ॥ ३३ ॥
सूर्येभ्योऽङ्गजा रक्षसि रजनीभ्यश्चरः पुनः ।
निकषायाः सुताः क्रव्यादेर्भुजो वरुणे पुनः ॥ ३४ ॥
यादो जलेभ्यः पतयः पाशादस्त्रादयस्तथा ।
वायौ नित्येभ्यो गतिः स्यादाशुशब्दाच्च गोगतिः ॥ ३५ ॥
श्रीदे शर्वेभ्यः सख्यादिस्तत्पुत्राज्जनकादयः ।
निधानयक्षकिन्नरधनेभ्यः स्वामिसन्निभाः ॥ ३६ ॥
अलकायाश्चैत्ररथात्पुष्पकात्पतयः पुनः ।
शिवे त्र्यैकभालेभ्यो दृशो वृषाद् वृषभात् ध्वजाः ॥ ३७ ॥
दिग्भ्यो वासांसि श्यामेभ्यः कण्ठात् कालात् पुराद्गजात् ।
पूषान्धकाभ्यां कामेभ्यो मखेभ्यः प्रतिपन्थिनः ॥ ३८ ॥
पशोर्गणेभ्यो भूताच्च गौरीभ्यः पतिसन्निभाः ।
शूलात् खट्वाङ्गात् गङ्गाया भुजगेन्दुमुखादपि ॥ ३९ ॥
पिनाकाच्च कपालाच्च कपर्दाच्च भृदादयः ।
गौर्यां महिषेभ्यः शुम्भात् निशुम्भान्मथनोमुखाः ॥ ४० ॥
भवेभ्यः प्रिया मेनाया हिमाद्य्द्रिमुखात्सुताः ।
हेरम्बे गणविघ्नाभ्यामीशाश्चैकपुरोरदाः ॥ ४१ ॥
मूषकेभ्यो वाहनानि गजेभ्यो वदनानि च ।

स्कन्दे शिखिभ्यो ध्वजाद्याः शक्तेश्च पाणिसन्निभाः ॥ ४२ ॥
शरादग्निभ्यो भूमुख्याः क्रौञ्चाद्रेस्तारकाद् द्विषः ।
गङ्गोमाभ्यः कृत्तिकाभ्यः सुताः षट्तो मुखानि च ॥ ४३ ॥
ब्रह्मण्यात्मजः पद्मेभ्यो नाभेर्भूप्रमुखास्तथा ।
सरोजेभ्योऽप्यासनानि हंसेभ्यो वाहनानि च ॥ ४४ ॥
ब्राह्मयां ब्रह्मभ्यो नन्दिन्यो वचनेभ्योऽधिदेवताः ।
विष्णौ श्रीभ्यः पतिसमा वार्द्धिभ्यः शयनादयः ॥ ४५ ॥
इन्द्रेभ्योऽवरजा वैनतेयेभ्यो वाहनानि च ।
दैत्येभ्योऽरयः पुराणात् यज्ञेभ्यः पुरुषात्पुनः ॥ ४६ ॥
शार्ङ्गात् चक्रगदाशङ्खादेः श्रीवत्सात् भृतस्तथा ।
तार्क्ष्येभ्यो ध्वजा देवक्याः पुत्राश्चतुःपुरोभुजाः ॥ ४७ ॥
गोपेभ्यः प्रभुसङ्काशाः पीतेभ्यो वसनानि च ।
कालियात् कालनेमेश्च चाणूराद्धेनुकान्मधोः ॥ ४८ ॥
पूतनायाः शाल्वात् कंसकेशिभ्यां यमलार्जुनात् ।
शिशुपालहयग्रीवराहुभ्यः कैटभान्मुरात् ॥ ४९ ॥
शकटेभ्यो बलिभ्यश्च द्विविदान्नरकादपि ।
हिरण्यकशिपोर्मेदबाणारिष्टाग्रतोऽरयः ॥ ५० ॥
रुक्मिण्याः सत्यभामाया राधायाश्च प्रियादयः ।
रामे मुसलात् सीरेभ्योऽस्त्राणि तालाग्रतो ध्वजाः ॥ ५१ ॥
रोहिण्याः पुत्रा रेवत्याः प्रियाः कृष्णादितोऽग्रजाः ।
तथा रुक्मिप्रलम्बाभ्यां यमुनाभ्यो भिदादयः ॥ ५२ ॥
नीलेभ्यो वसनप्राया लक्ष्म्यां कृष्णादितः प्रियाः ।
पद्मेभ्यो वासाद्याः क्षीराब्धिभ्योऽब्धिभ्योऽपि पुत्रिकाः ॥ ५३ ॥
कामे विषमादस्त्राणि श्रीभ्यः पुत्रा रतिप्रियाः ।
मधुभ्यः सुहृदो मीनमकरेभ्यो ध्वजादयः ॥ ५४ ॥
अनिरुद्धात्पितृमुखाः शम्बरात् सूर्यकाद्द्विदः ।
पञ्चादितः शरप्राया पुष्पेभ्यः केतनानि च ॥ ५५ ॥
मृणालाद्धनूंषि पुष्पेभ्यो बाणास्त्रधनूंषि च ।
शृङ्गाराभ्यां सङ्कल्पाच्चित्तेभ्यो योनिसन्निभाः ॥ ५६ ॥
तार्क्ष्येऽरुणेभ्योऽवरजा विष्णुभ्यो वाहनानि च ।
विनतायाः सुपर्णाश्च कश्यपाच्च तनूद्भवाः ॥ ५७ ॥
सर्पेभ्योऽरयः पक्षिभ्यो नाथा वज्रिमुखाज्जितः ।
दैत्ये दितेर्दनोः पुत्रा देवेभ्यो रिपवस्तथा ॥ ५८ ॥
पृथिव्यामब्धिभ्यो नेमीमेखलावसनानि च ।
शैले भूभ्यो धरा भ्रोऽप्युदयाद्रावुदयात्तथा ॥ ५९ ॥

पूर्वादेर्गिरयोऽस्ताद्रावस्तात्प्रत्यङ्मुखान्नगाः ।
हिमाद्रावुदग्रहिमेभ्योऽद्रिपोऽद्रिभ्योऽधिपास्तथा ॥ ६० ॥
मेनकायाः प्रियसमाः पार्वतीभ्यो गुरुः पुनः ।
मलये दक्षिणाच्छैलाः कैलासे स्फटिकान्नगाः ॥ ६१ ॥
मेरौ स्वर्गभ्यः स्वर्गेभ्यः सुवर्णेभ्योऽपि भूधराः ।
सूर्येभ्यः कान्ते सूर्येभ्योऽग्निभ्यो रत्नोपलादयः ॥ ६२ ॥
चन्द्रेभ्यः कान्ते चन्द्रेभ्यो मणयो दृषदोऽपि च ।
अब्धौ नदीभ्यो वारिभ्यः स्रोतसो यादसोऽधिपाः ॥ ६३
अद्भयो निध्याशयौ राशिर्धिर्दुग्धादेः परेऽर्णवाः ।
गङ्गायां सिद्धात् स्वःस्वर्गिनभोभ्यो निम्नगाः समाः ॥ ६४ ॥
जन्होः पुत्र्यः कालिन्द्यां कलिन्दादर्कादितः सुताः ।
कृतान्तेभ्यो भगिन्योऽपि रेवायां सकलात्तथा ॥ ६५ ॥
चन्द्रेभ्यस्तनयाः ताप्यां तपनेभ्यस्तनूद्भवाः ।
अब्जे जलेभ्यः सरसः पङ्काज्जन्मजरुड्हाः ॥ ६६ ॥
भृङ्गे पुष्पेभ्यो मध्वादेर्लिहः षट्शब्दतोऽङ्घ्रयः ।
सर्पे वातेभ्योऽशनाद्या द्विशब्दाद्रसनासमाः ॥ ६७ ॥
दृग्भ्यः श्रुतयो विषेभ्यः फणेभ्योऽपि धरादयः ।
मयूरे नीलेभ्यः कण्ठा भुजङ्गेभ्यो भुगादयः ॥ ६८ ॥
जलदेभ्यः सुहृत्तुल्या वृक्षे क्ष्माभ्यो जरुड्हाः ।
जलवाहे जलेभ्यस्तु वाहो मुग् दो धरादयः ॥ ६९ ॥
एवं परावृत्तिसहान् शब्दानौचित्यतो बुधः ।
समासव्यासिसिद्ध्यर्थं परावृत्य प्रयोजयेत् ॥ ७० ॥

स्तबकोऽयं निगदसिद्धः ।

इति श्रीजिनदत्तसूरि०शब्दसिद्धिप्रताने द्वितीये यौगिकनाममालास्तबको द्वितीयः ।

---

## अथाऽनुप्रासोपायमाह—

अनुप्रासस्य सिद्ध्यर्थं शब्दान् साधारणान् ब्रुवे ।
मण्डितं मण्डलैः पूरैः पूरितं सङ्कुलं कुलैः ॥ ७१ ॥
राजितं राजिभिर्युक्तं पङ्क्तिभिः पटलैः पटुम् ।
निचितं निचयैरोघैर्मोघं सञ्चयसञ्चितम् ॥ ७२ ॥
पुञ्जेन मञ्जुजातेन सुजातं वृन्दसुन्दरम् ।
कदम्बचुम्बितं सार्थकृतार्थं सगुणं गुणैः ॥ ७३ ॥
राशिभिर्भासितं व्रातैः क्रान्तं संहतिसंहतम् ।
सोमं स्तौमि ससङ्घट्टं सङ्घैः प्रीतप्रजं व्रजैः ॥ ७४ ॥

स्फुरन्मदं समुदयैः प्रकरेण प्रियङ्करम् ।
ततमानं वितानेन निकुरम्बसडम्बरम् ॥ ७५ ॥
निकरेण प्रीतिकरं निवहप्रवहत्प्रभम् ।
निकायेन सुकायश्रीविसरप्रसरद्रसम् ॥ ७६ ॥
यूथेन ग्रथितं जालजटालं पूगसङ्गतम् ।
सन्दोहसप्ररोहश्रि समुदायमदाश्रितम् ॥ ७७ ॥
समूहसुमहद्व्यूहमहितं वारधारकम् ।
समाजराजितं चक्राऽञ्चितमुत्करमुत्करैः ॥ ७८ ॥
चक्रवालविशालश्रीसङ्घातघटितोदयम् ।
धोरणीधारणं श्रेणीशरणं कलमालिभिः ॥ ७९ ॥
ततिभिर्विततं मालामालितावलिशालितम् ।
विशालशालितं कीर्णविस्तीर्णं भूरि पूरितम् ॥ ८० ॥
प्रभूतभूतं प्रचुरप्रचारं कलपुष्कलम् ।
भूयिष्ठपुष्टमुद्भ्रान्तादभ्रं बहुलतावहम् ॥ ८१ ॥
चारुप्रचारहारिस्फारितरुचिररुचिबन्धुराबन्धाः ।
शोभनशोभं सुषमसममधुरधुरोत्तमतमग्रिमग्राह्याः ॥ ८२ ॥
अर्हप्रवर्हसुन्दरतरसत्तमतमनवप्रवराः ।
पुण्यवरेण्यग्रामग्रामण्यौ काममभिरामः ॥ ८३ ॥
वलाद्वल्गुमनोहरतरसम्यग्रम्यमञ्जुरुचिपुञ्जाः ।
हृष्टप्रकृष्टकामं वामाग्र्याग्राः सुखप्रमुखाः ॥ ८४ ॥
मञ्जुलोज्ज्वलसोद्रेकप्रवेकानुत्तमक्रमाः ।
निवेशपेशलप्राग्रजाग्रत्प्राग्रहराग्रहाः ॥ ८५ ॥
नम्रकम्रं काम्यकामवर्यधुर्यप्रियक्रियाः ।
साधुशुद्धं कान्ततान्तस्पष्टपृष्टवराऽन्तराः ॥ ८६ ॥
मुख्यसंख्यरुच्यरुचिसम्यक्सौम्यस्फुरत्पराः ।
हृद्यविद्योतिसौभाग्यभाग्यमाधुर्यधुर्यकाः ॥ ८७ ॥
प्रधानसन्धानज्येष्ठश्रेष्ठौ मनोरमः क्रमः ।
पराध्यर्पपरर्द्धिजात्यजातोऽनुत्तरसन्तरत् ॥ ८८ ॥
सरलाग्रेसरोवर्गाग्रणीरन्योन्यधन्यभाः ।
अकनीयःकमनीयः पुरोगतपुरोगकाः ॥ ८९ ॥

अथ श्वेतादिवर्णाः—

धवलप्रबलो लब्धवलक्षो गौरगौरवः ।
सितस्मितशुभ्राऽदभ्रकेतकश्वेतकान्तयः ॥ ९० ॥
पलाण्डुपाण्डुरहरहरिणौ गर्जदर्जुनः ।
दन्तावदातो बिसविशदः शुक्लांशुशुक्लताः ॥ ९१ ॥

अरुणारुणदृक्कोणशोणपाटलपाटलाः ।
पक्वाम्रताम्रमाञ्जिष्ठवरिष्ठौ रोहिरोहितः ।
उद्रिक्तरक्तलोहितलौहितादभ्रबभ्रवः ॥ ९२ ॥
कडारस्फारहारिद्रहारिरुक्भद्रकद्रवः ।
बभ्रुवभ्रवङ्गपिङ्गौ भृशं पिशङ्गमङ्गकम् ॥ ९३ ॥
कपिकपिशकपिलहरिहरितपिञ्जरपुञ्जपिङ्गलकलभाः ।
उन्मीलन्नीलश्रीः परितो हरितो निकामतः श्यामाः॥ ९४ ॥
कृष्णकृष्णतालकालमेचकिकण्ठमेचकाः ।
श्यामाः श्यामलमसिवदसितः शितिरुक्स्थितिः॥ ९५ ॥
सारङ्गरङ्गदङ्गश्रीः शवलप्रबलप्रभः ।
प्रसरद्धूसरो धूम्रधूमलो धूमकम्ररुक् ॥ ९६ ॥
पुरः कर्बुरकिर्मीरकिरणः कलचित्रलः ।
कपोतकान्तिकल्माषमयूखौ चित्रचित्ररुक् ॥ ९७ ॥
निर्वर्ण्याभ्यर्णसन्नद्धासन्नसन्निधिसन्धयः ।
सदेशपेशलश्रीमत्ससीमविकटान्तिकाः ॥ ९८ ॥
सन्निधानगुणाधानसन्निकर्षप्रकर्षता ।
अभ्यग्रमभ्यग्रहणमुपकण्ठविकुण्ठता ॥ ९९ ॥
अभ्यासमभ्यासमता निकटप्रकटस्थितिः ।
उपान्तकान्तसम्भ्रान्तपरिक्रीडत्सनीडता ॥ १०० ॥
सवेशसन्निवेशश्रीः सविधो विविधोदयः ।
शश्वत् पार्श्वे सन्निकृष्टोत्कृष्टसमीपदीपताः ॥ १०१ ॥
समर्यादस्वमर्यादो हिताव्यवहिताशयः ।
अपदान्तपदान्तश्रीरनन्तरपरस्परः ॥ १०२ ॥
संसक्तव्यक्तो नेदिष्ठदिष्टोऽथ दूरपूरतः ।
विप्रकृष्टः प्रकृष्टश्च दवीयःपदवी यथा ॥ १०३ ॥
दविष्ठविनिविष्टोऽथ धर्मकर्मणि शर्मभाक्
सतत्त्वसत्वसहजसहचारीति नीतिमान् ॥ १०४ ॥
रूपस्वरूपस्वभावभावसंसिद्धिसिद्धयः ।
निसर्गसर्गप्रकृतिकृतिनो लक्षणक्षणाः ॥ १०५ ॥
शीलानश्लीलशीलोऽथ स्वस्थावस्थादशावशात् ।
रतिस्थितिरथो स्नेहासन्देहप्रीतिरीतितः ॥ १०६ ॥
प्रेमस्थेमातिदाक्षिण्यदाक्षाऽनुकूलमूलतः ।
संभ्रमभ्रमसम्पर्कात् तर्कनिःशङ्कसङ्कटाः ॥ १०७ ॥
अवधाननिधानश्रीः समाधानविधानतः ।
प्रणिधानसुधाधानसमाधिर्व्याधिवाधिनी ॥ १०८ ॥

धर्मशर्मकरः पुण्यनैपुण्यो वृषनिस्तृषः ।
श्रेयःप्रेयोभगधेयः सन्धेयः सुकृतं कृतम् ॥ १०९ ॥
नूतनाकूतसामन्तमतता भावभावना ।
स्वयमाशयातिशयादथ विस्तारतारता ॥ ११० ॥
प्रपञ्चसञ्चनान्यासविन्यासाभोगभोगता ।
नवच्छायोच्छ्रयारोहरोहच्चयसमुच्छ्रयाः ॥ १११ ॥
अथोदग्रसमग्रत्वमुच्छ्रितस्थितसंश्रितः ।
रङ्गत्तुङ्गच्चङ्गदुरुचनुन्नोन्नतधुरोद्धुराः ॥ ११२ ॥
समस्तन्यस्तसकलसकलोर्द्धवसर्वता ।
नूनमन्यूननिखिलविलसद्विश्वविश्वता ॥ ११३ ॥
अखण्डमण्डनाव्यग्रसमग्राशेषाशेखरः ।
अखिलानाविलःशुद्धमुद्धतं रुचिरं शुचिः ॥ ११४ ॥
पवित्रचित्रताभावपावनः पूतनूतनः ।
ज्वलदुज्ज्वलविमलोत्तमौ मिलदनाविलः ॥ ११५ ॥
नवीनपीनसद्यस्कहृद्यतानूतनूतनाः ।
प्रत्यग्राव्यग्रताभव्यनव्यत्वाभिनवस्तथा ॥ ११६ ॥
निकामरामातिमात्रगात्रैकान्तकान्तता ।
एवं सामान्यशब्दानां ज्ञेयाऽनुप्रासवासना ॥ ११७ ॥
अथो कथादिके राजवर्णनाद्युपयोगिनः ।
अनुप्रासस्य सिद्धयर्थं शब्दान् कतिपयान् ब्रुवे ॥ ११८ ॥
महादेव महाशर्व गर्वाहरमनोहर ।
उग्रोऽग्रो गिरि गिरिशो वर्गो भर्गोत्तमक्रमः ॥ ११९ ॥
धराधीशानिशानश्रीर्भवप्रवरवैभवः ।
विना पिनाकिना चेतो वन्हिरेताः शिवः शिवः ॥ १२० ॥
शम्भुर्निशुम्भनो रुद्ररौद्रो निःशङ्कशङ्करः ।
मर्द्दी कपर्दी भूपालिकपाली भीमभीमभाः ॥ १२१ ॥
स्थाणुः स्थाणुर्वामदेव वामो भैरवभैरवः ।
खण्डपरशुरखण्डश्रीर्निस्तन्द्रश्चन्द्रमौलिवत् ॥ १२२ ॥
जितारातिः पुरारातिः सव्योमकेशपेशलः ।
नीलकण्ठसद्भूनीलो नीललोहितलीलया ॥ १२३ ॥
विरूपाक्षः सरूपाक्षः कृत्तिवासाः प्रकाशभाः ।
वृषा वृषाङ्कसर्वाङ्गखट्वाङ्गधरदुर्धराः ॥ १२४ ॥
श्रीकण्ठोत्कण्ठया कण्ठे कण्ठेकालकरालरुक् ।
ईश्वरोऽनश्वरः स्फूर्जद्धूर्जटिर्मूलशूलभृत् ॥ १२५ ॥

मृत्युं मृत्युञ्जयस्फूर्तिरष्टमूर्तिरमूर्तिमान् ।
भूतप्रभुः प्रभूतश्रीर्विष्टपः शिपिविष्टवत् ॥ १२६ ॥
गौरीगौरीशकालीशशाली चण्डीशचण्डिमा ।
दुर्गा दुर्गाणि रुद्राणी वाणी शर्वाणिपाणिना ॥ १२७ ॥
वात्या कात्यायिनी सर्वमङ्गला सर्वमङ्गला ।
नवानीता भवानी साऽपर्णा वर्णा शिवाऽशिवा ॥ १२८ ॥
रणे गणेशविघ्नेशनिघ्ने हेरम्बडम्बराः ।
परः परशुपाणिश्रीः सनायकविनायकः ॥ १२९ ॥
स्तम्बो लम्बोदरो दन्तैकदन्तेभास्यलास्यवत् ।
दूषको मूषकरथो महासेनमहा महान् ॥ १३० ॥
स्वामी कामी कृतास्कन्दः स्कन्दषण्मुखसंमुखाः ।
महातेजोमहातेजा दत्तार्तिः कार्तिकेयवत् ॥ १३१ ॥
कुमारसारसेनानीः सेना गाङ्गेयगेयता ।
सब्रह्मचारी सब्रह्म यमाहुर्बाहुलेयवत् ॥ १३२ ॥
शाखा विशाखा क्रौञ्चारिसञ्चारिशरभूशराः ।
तारका तारकारातिर्नादद्वादशलोचनः ॥ १३३ ॥
विश्वरूपस्वरूपश्रीः क्रतुपूरुषपौरुषः ।
दामोदरवदुद्दामो धरणीधरदुर्धरः ॥ १३४ ॥
श्रीवत्सवदतुच्छश्रीः स त्रिविक्रमविक्रमः ।
सेवासु वासुदेवाभः स हृषीकेशपेशलः ॥ १३५ ॥
विष्वक्सेन विष्वक्सेनच्छद्मना पद्मनाभवत् ।
विष्णुवर्त्तिष्णुवैकुण्ठकुण्ठलोकेशकेशवाः ॥ १३६ ॥
द्विट् मुण्डपुण्डरीकाक्षो भारान्नारायणप्रभुः ।
स्फीतां पीताम्बरो मञ्जुर्मञ्जुकेशाच्युताच्युतः ॥ १३७ ॥
श्रीवत्साङ्कशशाङ्कश्रीर्जनार्दन इवाऽर्दनः ।
सदा गदाधरः शाली वनमाली हरिर्हरिः ॥ १३८ ॥
आशादाशार्हवद्ब्बाणः पुराणपुरुषक्रमः ।
इन्द्रोपेन्द्रकृष्णकृष्णपुरुषोत्तमपौरुषाः ॥ १३९ ॥
वृषा वृषाकपिः सेतुस्तार्क्ष्यकेतुरजोऽग्रजः ।
नयज्ञयज्ञपुरुषविक्रमोपमविक्रमः ॥ १४० ॥
विष्टरश्रवसाविष्टो विश्वं विश्वम्भरः प्रभुः ।
मनाक् सनातनः शौरिर्गौरि गोविन्द विन्दति ॥ १४१ ॥
द्वीपश्रीपतिदैत्यारिशैत्या कुन्दमुकुन्दवत् ।
अगाधमाधवः पद्म पद्मेशयवदाशयः ॥ १४२ ॥
बलदेवबलो देवः सीरभृद्धीरविक्रमः ।

कालिन्दीकर्षणोत्कर्षसोद्रेकस्त्वेककुण्डलः ॥ १४३ ॥
लीलां नीलाम्बरो भद्रबलभद्रो हली बली ।
कुशली मुशली तालध्वजोत्तालो बलाद्बलः ॥ १४४ ॥
ततो लम्बः प्रलम्बघ्नः क्ष्मापालः कामपालवत् ।
अनन्तानन्तसङ्ग्रामो रामकामः सरामवत् ॥ १४५ ॥
सङ्कल्पजन्मकल्पश्रीर्विषमो विषमायुधः ।
चञ्चत्पञ्चशरः पुष्पपुष्पास्त्रो घस्मरः स्मरः ॥ १४६ ॥
प्रद्युम्नद्युम्नकन्दर्पकन्दसद्दर्पदर्पकाः ।
मनो मनोभवो भव्यवदनो मदनोपमः ॥ १४७ ॥
पीनमीनध्वजः कामकामना मारसारता ।
शृङ्गारयोनिः शृङ्गारस्तम्बशम्बरसूदनः ॥ १४८ ॥
अनङ्गवङ्गसङ्गत्या मधुमित्रपवित्रभाः ।
अथ मन्मथवद्दूनप्रसूनशरभासुरः ॥ १४९ ॥
प्रजा प्रजापतिर्धर्ता जगत्कर्ता विधिर्विधिः ।
ब्रह्म सब्रह्मचारित्वं पितामहमहा महान् ॥ १५० ॥
स्रष्टा स्पष्टास्फुरन्मेधा वेधाः कमलभूरभूत् ।
स्वयम्भूमिः स्वयम्भूवद्धाता त्राता जगत्त्रयीम् ॥ १५१ ॥
चतुरा चतुरास्यश्रीः पद्मभूः सद्म सम्पदाम् ।
परमेष्ठः परमेष्ठी वेदगर्भसगर्भभाः ॥ १५२ ॥
शतानन्दकृतानन्दद्रौहिणो द्रुहिणाकृतिः ।
सुरज्येष्ठः सतां ज्येष्ठो नाभिभूर्नाभिभूतये ॥ १५३ ॥
श्रीमानिन्द्र इवोन्निद्रः कश्चिद्दु दुश्च्यवनोपमः ।
महामहाः सहस्राक्षः समन्युः शतमन्युवत् ॥ १५४ ॥
वर्यः पर्यङ्कवत्पूर्वः पूर्वदिक्कान्तकान्तभाः ।
सुनासीरसुनासीरः साक्षादिव दिवस्पतिः ॥ १५५ ॥
शक्रवक्रपुरुहूतपूतः सुत्रामधामभाक् ।
नास्तो वास्तोष्पतिः क्षोणीखण्डमाखण्डलप्रभः ॥ १५६ ॥
अनघो मघवा भूपः स पुरन्दरसुन्दरः ।
वासवासवसारौजा बिडौजा दम्भजम्भजित् ॥ १५७ ॥
ससङ्क्रन्दनसङ्क्रन्दः पाकशासनशासनः ।
प्राचीनबर्हिः प्राचीनवर्गः स्वर्गपतिप्रभः ॥ १५८ ॥
आदित्यनित्यसविता कविता क्रूरशूरवत् ।
अंशुमाली महःशाली दिवाकर इवाकरः ॥ १५९ ॥
द्वादशात्मा महात्माऽसौ त्रयीतनुमनुव्रजन् ।
जगच्चक्षुःसहस्रश्रीरहर्पतिमहस्ततिः ॥ १६० ॥

धर्मकर्मकर्मसाक्षी पवित्रश्चित्रभानुवत् ।
अर्यमा वर्यमाहात्म्यसत्पूतः सप्तसप्तिवत् ॥ १६१ ॥
आर्त्तं मार्त्तण्डचण्डश्रीर्मणिर्दिनमणिद्युतिः ।
द्योतनः प्रद्योतनवत् सहस्रांशुमहःसहः ॥ १६२ ॥
भास्वद्भास्वद्भानुभानुः शौर्यसूर्यरविच्छविः ।
पतङ्गचङ्गतरणितरस्वस्तिगभस्तयः ॥ १६३ ॥
विरोचनरोचनश्रीः पूषा भूषार्ककर्कशाः ।
नभो नभोमणिः प्रांशुः खरांशुः कोपगोपतिः ॥ १६४ ॥
दण्डदण्डधरो ध्वान्तकृतान्तसमविक्रमः ।
करालकालसद्धर्मो धर्मराजोऽन्तकान्तकृत् ॥ १६५ ॥
हीना पीनाशकीनाशवर्तिना समवर्तिना ।
सुश्राद्धश्रद्धदेवेन शमनो दमनो द्विषाम् ॥ १६६ ॥
संमदी कौमुदीकान्तः साक्षाद्दाक्षायणीपतिः ।
दोषधीरोषधीभर्ता मुदः कुमुदबान्धवः ॥ १६७ ॥
दैवाज्जैवातृकः सोमः कोमलो बिन्दुरिन्दुवत् ।
विधुर्विधुरितो राजा राजानिस्तन्द्रचन्द्रमाः ॥ १६८ ॥
दक्षनक्षत्रनाथश्रीः रोहिणी रोहिणीशरुक् ।
स्फारातारापतिस्तारतारकास्तारकः प्रभुः ॥ १६९ ॥
गिरमाङ्गिरसक्षीवपीवजीवोऽगुरुर्गुरुः ।
धिषणो धिषणोदग्रश्चित्रश्चित्रशिखण्डिजः ॥ १७० ॥
वाचं वाचस्पतिः सौरिर्भूरिर्बृहद्बृहस्पतिः ।
सचिवार्यसुराचार्यसभृङ्गीपतिगीष्पतिः ॥ १७१ ॥
इति शब्दा नृपामात्यनृपपुत्रादिवर्णने ।
यथौचित्यं प्रयोक्तव्याः शीघ्रानुप्राससिद्धये ॥ १७२ ॥

अनुप्रासानयनोपायान्तरमाह—

आदिक्षान्तलिपौ कादिक्षान्तशब्दगवेषणम् ।
चित्रानुप्रासयमकशब्दनिश्चयकृद्भवेत् ॥ १७३ ॥

अकारादिक्षकारान्तशब्दे सति अन्ये तत्सदृशाः ककारादिक्षकारान्ताः शब्दा वीक्ष्यन्ते, तदा चित्राऽनुप्रासयमकशब्दनिश्चयो भवति । यथा अरशब्दस्य सदृशाः कादिक्षान्तशब्दाः यथासम्भवं लिख्यन्ते-अर कर खर गर घर चर घरट्ट जरया क्षरया विड्वर तरणि संस्तर दर धर नर परस्पर अम्बर भर मर वर शरवण सर हर अक्षर । तथा-आर कार गार चार जार दार तार धार व्यापार स्फार भार मार वार सार हार क्षार । तथा—आम काम ग्राम आचाम जामयः तामस दाम धाम नाम पामया याम राम वाम श्याम साम क्षामाः । तथा-कीर चीर जीरक तीर नीर धीर भीरवः सीर हीर क्षीर कोटीर कुटीर वानीर महीरमणाः । तथा-अर्ण कर्ण तर्णक पर्ण वर्ण स्वर्ण अर्णव

एवं सर्वशब्देषु शब्दान्तराणि गवेषणीयानि ।

शब्दस्य सकलान् वर्णान् स्वरैः सर्वैः क्रमाक्रमात् ।
संयोज्य जनिताः शब्दाश्चित्रानुप्राससिद्धिदाः ॥ १७४ ॥

एते शब्दाश्छन्दोभ्यासस्तबके शब्दभेदजशब्दविवरणात् ज्ञेयाः ॥

इति श्रीजिन० शब्दसिद्धिप्रताने द्वितीयेऽनुप्रासस्तबकस्तृतीयः ।

---

अथ मुख्यलाक्षणिकव्यञ्जकानां शब्दानां स्वरूपमाह—

शब्दो मुख्यो लाक्षणिको व्यञ्जकश्च त्रिधा मतः ।
मुख्यार्थवाचको मुख्यो व्यापारोऽर्थेऽस्य चाऽभिधा ॥ १७५ ॥
लक्ष्याश्रितो लाक्षणिको व्यापारो लक्षणाऽस्य तु ।
व्यङ्ग्ययुक्तो व्यञ्जकोऽस्य व्यापारो व्यञ्जनं मतम् ॥ १७६ ॥

साक्षात्सङ्केतविषयो गोपिण्डादिर्वाच्यो मुख्योऽर्थस्तदभिधायी गोप्रभृतिशब्दोऽपि मुख्यशब्दस्य मुख्यार्थं व्यापारः संकेतापेक्षा, वाच्याऽवगमनशक्तिरभिधा । लक्ष्यलक्षकस्य लाक्षणिकशब्दस्य लक्ष्यनिष्ठो व्यापारो, लक्ष्यावगमनशक्तिर्लक्षणा । व्यङ्ग्यव्यञ्जनक्षमस्य व्यञ्जकशब्दस्य व्यङ्ग्यनिष्ठो व्यङ्ग्यावगमनशक्तिर्व्यञ्जनम् ।

मुख्यार्थबाधे मुख्यार्थासन्नत्वे लक्ष्यतेऽपरः ।
रूढेः प्रयोजनाद्वाऽर्थो यत्सोक्ता लक्षणा बुधैः ॥१७७॥

मुख्यार्थबाधाऽनुपपत्तेरनुपयोगाच्च 'कर्मणि कुशलः', 'गङ्गायां घोषः' इत्यादावनुपपत्तिः । 'रामोऽस्मि सर्वं सहे' इत्यादावनुप्रयोगः । अत्र प्रस्तावादभिधेयप्रतिपत्तौ रामशब्दोऽनुप्रयुज्यमानत्वात् बाधितार्थः स्वाभिधेयभूतार्थगामित्वरूपसम्बन्धाद्राज्यभ्रंशप्रवासपितृसीतावियोगादिदुःखपात्रत्वं लक्षयति । असामान्यनिर्वेदादिव्यङ्ग्यं प्रयोजनम् । मुख्यार्थासन्नत्वं पञ्चधा । यदुक्तम्—

'अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः ।
वैपरीत्यात् क्रियायोगात् लक्षणा पञ्चधा मता' ॥

अभिधेयं मुख्यार्थस्तेन सह सम्बन्धो यथा—'गङ्गायां घोषः' । अत्र गङ्गाशब्दाऽभिधेयस्य स्रोतसो घोषाधारतानुपपत्तेः मुख्यार्थबाधे योऽयं समीपसमीपिभावात्मा सम्बन्धस्तदाश्रयणेन गङ्गाशब्दस्तटं लक्षयति । गङ्गात्वे एकार्थसमवेतपुण्यत्वमनोरमत्वशैत्यादिप्रतिपादनं व्यङ्ग्यं प्रयोजनम् । न हि तत्पुण्यत्वादि गङ्गातट इत्यादिशब्दान्तरैः स्प्रष्टुमपि शक्यते । सादृश्याद्यथा—'गौर्वाहीकः', गौरेवायं' वा इत्यादौ मुख्यार्थस्य सास्नादिमत्त्वादेः प्रत्यक्षादिप्रमाणेन बाधे अभिधेयेन सादृश्यात्तद्गतजाड्यमान्द्यादिगुणयुक्तो वाहीको लक्ष्यते । प्रयोजनं सारोपायां ताद्रूप्यप्रतिपत्तिः । साध्यवसानायां सर्वथाऽभेदप्रतिपत्तिः । समवायात्साहचर्याद्यथा—'कुन्ताः प्रविशन्ती'त्यादौ कुन्तानां प्रवेशानुपपत्त्या मुख्यार्थबाधे साहचर्यात् यथा कुन्तवन्तः पुरुषा लक्ष्यन्ते । प्रयोजनं तु रौद्रत्वादीनां सातिशयानां प्रतिपादनम् । वैपरीत्या-

यथा—'अभद्रमुखे भद्रमुखः । अत्र भद्रमुखशब्दस्य अभद्रमुखे प्रयोगात् स्वार्थबाधः । अतोऽसौ स्ववाच्यभूतस्य भद्रमुखत्वस्य वैपरीत्यादभद्रमुखत्वं लक्षणयाऽवगमयति । प्रयोजनं तु मुखाऽलभ्यार्थप्रतीतिः । क्रियायोगाद्यथा—'महति समरे शत्रुघ्नस्त्वम्' इति । अत्र अशत्रुघ्ने शत्रुघ्नशब्दप्रयोगात् स्वार्थबाधः । शत्रुघ्नशब्दश्च अशत्रुघ्ने शत्रुहननक्रियाकर्तृत्वायोगात् लक्षणया प्रयुक्तः । प्रयोजनं च वर्ण्यमानस्य शत्रुघ्नशब्दाभिधेयनृपरूपताप्रतिपादनम् । 'कर्मणि कुशलः' इत्यत्र कुशान् लातीति दर्भग्रहणायोगात् मुख्यार्थबाधे विवेचकत्वादौ च सम्बन्धे रूढितः प्रवीणपुरुषरूपोऽर्थो लक्षणाव्यापारेण लक्ष्यते । एवं द्विरेफद्विपानुलोम्यलावण्यादयो रूढिशब्दाः, तत एतेषु रूढिलक्षणा । 'गङ्गायां घोषः' इत्यादौ प्रयोजनात् लक्षणा । प्रयोजनं च पावित्र्यादि व्यङ्ग्यम् । तत्त्वमिदम्—रूढिलक्षणायां वाचको लाक्षणिकश्चेति नामद्वयम् । अभिधा, लक्षणेति व्यापारद्वयम् । प्रयोजनलक्षणायां तु शब्दस्य वाचको, लाक्षणिको, व्यञ्जकश्चेति नामत्रयम् । अभिधा, लक्षणा, व्यञ्जनं चेति व्यापारत्रयम् । रूढिलक्षणायान्तु व्यङ्ग्यप्रयोजनाभावात् शब्दस्य न व्यञ्जकता न व्यञ्जनव्यापारः ।

शब्दव्यापारो निरन्तरार्थनिष्ठोऽभिधा मता ।
स तु सव्यवधानार्थनिष्ठो भवति लक्षणा ॥ १७८ ॥

सव्यवधानो मुख्यार्थबाधादिहेतुत्रयान्तरितो यो लक्ष्यस्तटादिरर्थस्तत्र विश्रान्तः शब्दव्यापारो लक्षणा । अभिधैव मुख्यार्थं बाधिता सती अचरितार्थत्वात् अन्यत्र प्रसरति, तत्पुच्छभूतैव लक्षणा ।

शुद्धोपचारमिश्राऽसौ द्विधा शुद्धाऽपि हि द्विधा ।
उपादानलक्षणाऽऽद्या परा लक्षणलक्षणा ॥ १७९ ॥

उपादानं स्वसिद्ध्यर्थं पराक्षेपः । यथा 'पुरे कुन्ताः प्रविशन्ति' । अत्र कुन्तैः स्वप्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते तत उपादानेनेयं लक्षणा ।

परार्थं स्वार्पणं लक्षणेन लक्षणलक्षणा ।

यथा—'गङ्गायां घोषः' । अत्र तटस्य घोषाधिकरणतासिद्धये गङ्गाशब्दः स्वार्थमर्पयतीतीत्यादौ लक्षणेन लक्षणा । अयमभिप्रायः—यत्र शब्दः सर्वथा स्वार्थमत्यजन् अन्यमर्थं लक्षयति तत्र लक्षणेन तटादिज्ञापनेन लक्षणा स्यात् । यत्र तु स्वार्थमपि वदन्नन्यमुपादत्ते तत्रोपादानेन लक्षणा । इमौ द्वावपि भेदौ शुद्धौ, उपचारेणाऽमिश्रत्वात् । यथा 'गौर्वाहीकः' इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते, न तथाऽत्रेति भावः । उपचारमिश्राऽपि चतुर्विधा ।

साद्दृश्याद्गौणसारोपा गौणसाध्यवसानिका ॥ १८० ॥
गौर्वाहिको गौरेवाऽयम्

यत्रोपमानगतगुणतुल्यगुणयोगलक्षणं पुरःसरीकृत्योपमेये उपमानशब्द आरोप्यते तौ गौणौ भेदौ, गुणेभ्य आगतत्वात् गौणशब्दवाच्यौ ।

सम्बन्धान्तरतः पुनः ।
विशेया शुद्धसारोपा शुद्धसाध्यवसानिका ।

आयुर्घृतमायुरेवेदम्

अनयोः शुद्धभेदयोः कार्यकारणभावः सम्बन्धः, सादृश्याभावान्न गौणता । यथा आयुष्कारणं घृतं तथा न क्षीरादीति क्षीरादिवैसादृश्येन आयुःशब्दान्न व्यभिचारतीति कार्यकारित्वादि प्रयोजनम् ।

षड्भेदेति लक्षणा ॥ १८१ ॥

उपादानलक्षणा, लक्षणलक्षणा गौणसारोपा, गौणसाध्यवसाना, शुद्धसारोपा, शुद्धसाध्यवसाना इति षड् भेदाः ।

आरोप्यारोपविषयौ सारोपायां स्फुटावुभौ ।
पुनः साध्यवसानायामरोप्याऽन्तर्गतः परः ॥ १८२ ॥

आरोप्यो गवादिः आरोपविषयो वाहीकादिः, सारोपा सादृश्यहेतुका, एषा उपमानोपमेयस्य विद्यमानरूपत्वात् रूपकालङ्कारबीजम् । यत्राऽऽरोप्येण गवादिना निगीर्णतया आरोपविषयस्य वाहीकादेः प्रतीतिः सा साध्यवसाना, इयमतिशयोक्तेर्बीजम् । यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

कार्यकारणभावादिलक्षणायां तु न रूपकादिविषयता, सदृश्याभावात् । यथा—

आयुर्घृतं यशस्त्यागो भयं चौरः सुखं प्रिया ।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयः सत्तीर्थसेवनम् ॥

तथा अन्यापदेशालङ्कारस्य साध्यवसानलक्षणात्वम् । यथा—

अनर्घ्यः कोऽप्यन्तस्तव हरिण हेवाकमहिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः ।

इत्यत्र हरिणेन सह प्रतीयमानस्याऽभेदः ।

सम्बन्धा बहवः । यदुक्तम्—'एकशतं षष्ठ्यर्थाः' । क्वचित्तादर्थ्यादुपचारः, यथा—इन्द्रार्थाः स्थूणा इन्द्रः । क्वचित् स्वस्वामिभावाद्यथा-राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावाद्यथा—अग्रहस्त इत्यग्रमात्रेऽवयवे हस्तः । क्वाऽपि तात्कर्म्यात् यथा—अतक्षा तक्षा । क्वचिन्मानाद्यथा—आढकमश्नाति । क्वचित् स्थानाद्यथा—मञ्चाः क्रोशन्ति । इत्यादयः सर्वे यथालक्ष्यं लक्षणीयाः । यदाहुः—'सहचरणस्थानतादर्थ्यवृत्तिमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः' । एषु शुद्धा लक्षणा । काचित् रूढितः, काचित् प्रयोजनात्, काचित् सारोपा, काचित् साध्यवसाना ।

अथ लक्षणार्हाः केचिच्छब्दाः कथ्यन्ते—

चित्रेन्द्रजालवाच्यद्विर्भावस्वप्नयमकसंवादाः ।
द्वैगुण्याभिनयकथाद्विरुक्तिपर्यायवक्रपुनरुक्तिः ॥ १८३ ॥
रूपावस्थार्थावपुर्भवान्तरं परिणतिविवर्त्तौ ।
अनुवादानुप्रासानुकृतिच्छायाप्रतिबिम्बशब्दौ च ॥ १८४ ॥
प्रतिवीरमल्लनायककविवेशी बन्धुरनुकूलः ।

प्रणयाज्यज्ञातिसुहृद्दायादसनाभिसहचरसतीर्थ्याः ॥ १८५ ॥
सब्रह्मचारिनीलीरागसहाध्यायिसदृशसध्यूञ्चः ।
गणनाधिकः सवर्णः संवादी सांयुगीनरिपू ॥ १८६ ॥
अधिदैवतविद्यागुरुकुलनाथकुलपुरःपुरुषाः ।
ओङ्कारचक्रवर्तिक्षेमङ्करसार्थवाहतीर्थानि ॥ १८७ ॥
ज्येष्ठसभावत्यग्रेसरोत्तमर्णप्रतीक्ष्यजितकाशि ।
अद्वैतवादिधुर्योल्लाघनगृहमेधिनोऽध्यक्षाः ॥ १८८ ॥
तत्त्वब्रह्मोपनिषद्रहस्यचैतन्यधृतपरात्मानः ।
सौरभ्योत्कर्षरसाभोगानन्दाभिजात्यपरभागाः ॥ १८९ ॥
लयसर्वस्वविलासास्तण्डुलनिर्यासभाग्यमज्ञानः ।
जीविततात्पर्यार्थव्युत्पत्त्यपवादमर्ममकरन्दाः ॥ १९० ॥
साम्राज्यसिंहनादाहङ्कारैश्वर्यसंस्कृतविपाकाः ।
सारोद्धारनिदानव्याख्याटीकाचरित्रविश्रम्भाः ॥ १९१ ॥
मूलद्रव्यविवेकव्याकरणनिरुक्तसौष्ठवाभ्युदयाः ।
सौन्दर्योन्मेषनवीनत्वप्ररोहसंभ्रमोत्साहाः ॥ १९२ ॥
वैदग्ध्यावष्टम्भावुत्सवनवनीतयौवनादेशाः ।
महिमनिघण्टौद्धत्यान्तरङ्गपूर्वोक्त्यधित्यकास्वेच्छाः ॥ १९३ ॥
व्याप्तिर्बहुघनपीवक्षीबमहोद्दामतुङ्गताः प्रौढिः ।
सर्वाभिसारवृद्धिव्यूहव्यासाऽट्टहाससङ्घट्टाः ॥ १९४ ॥
विष्कम्भवज्रपातानध्यायापन्हवाविसंवादाः ।
केतूदयान्तरायावातङ्कोपप्लवाध्यवस्कन्दाः ॥ १९५ ॥
प्रत्याख्यानान्तर्द्धिव्यापेधविडम्बनान्यतीचाराः ।
अनुपदारुन्तुदकद्वदवैरङ्गिकनास्तिकाः पुरोभागी ॥ १९६ ॥
स्थायी द्रव्यं किट्टस्तुषपिण्याकौ पलालपद्धूली ।
उद्वाहपूर्वरङ्गप्रतिमाप्रस्तावनाटयसम्फेटाः ॥ १९७ ॥
अङ्गोद्वर्तनशाखापुरशाखामङ्गलावतरणानि ।
प्रश्नोत्तरप्रहेले कलभकिशोरौ प्रवालमञ्जर्यौ ॥ १९८ ॥
निर्माल्यभङ्गिकरणीकैतवपाखण्डकर्णिकाभेदाः ।
तर्णकपरागसैन्योपपदसमस्याकलान्तरोत्सर्गाः ॥ १९९ ॥
प्राकाम्यवस्तुवाचिकसम्बोधनपादुकावहित्थानि ।
व्यवहारकिंवदन्तीप्रभूतविज्ञानकारिकोपाधिः ॥ २०० ॥
बहिरङ्गोपश्रुतिमृगतृष्णानासीरपादपीठानि ।
व्यापृतिदिग्धपरोक्षागण्डूपोपत्यकाप्रहसनानि ॥ २०१ ॥
युवराजशिष्यसैनिकसचिवप्रतिहारमण्डलेशगणाः ।
वैहासिकसेनानीवैतालिकबटुपदात्यनुगाः ॥ २०२ ॥

ग्रामीणपारिपार्श्विकनान्दीचटुकारभक्तपरिवाराः ।
प्राकृतपरान्नमायिकदासपराधीनयद्धदासधराः ॥ २०३ ॥
वैमात्रेयेर्ष्यालूनपरिचारकभर्तृहारककनिष्ठाः ।
अधमर्णराजवंश्यौ वन्दारुरताश्चलस्फुलिङ्गकरणाः ॥ २०४ ॥
दिङ्मात्रमेकदेशः खण्डं बालोऽङ्कुरः शिशुता ।
संक्षेपक्षामत्वावयवकलाशीकरलहर्यः ॥ २०५ ॥
इत्याद्या लक्षणाशब्दाः सदृशत्वोपयोगिनः ।
उपमाने क्वचिद्योज्या उपमेये क्वचित्तथा ॥ २०६ ॥

उपमाने यथा—

इन्दुर्वक्त्रस्य वीप्सासदनमुपकथा पादयोः पङ्कजाली,
पर्यायोऽलिः कबर्या, ननु तनुमहसां कर्णिकाकर्णिकारम् ।
आभासः कुम्भिकुम्भद्वयमुरसिजयोः, कामकोदण्डदण्डः,
पाखण्डं भ्रूलतायाः, रतिरभिनयनं, पश्य रूपस्य यस्याः ॥

उपमेये यथा—

व्याषेधो धरणीधरेशितुरनध्यायः सुधायाः, विधो-
रन्तर्द्धिर्धनदाचलस्य निधनं, दुग्धोदसिन्धोः पिधा ।
प्रत्याख्यानमभानवद्विपमहादेहद्युतेर्निन्हवो
जान्हव्यास्तव भूभुजङ्ग यशसां भारो दिशां हारति ॥

अन्येऽपि लक्षणाशब्दा लिख्यन्ते । यथा—लुण्टाक जल्पाक गृहयालु स्पृहयालु घस्मर मेदुर भङ्गुर छिदुर जागरूक वावदूक विकस्वर प्रमद्वर सत्वर जित्वर गत्वर कम्प्र उन्मदिष्णु वैतण्डिक मायिक तुन्दिल तुण्डिक पिचण्डिल पिचण्डिक तुण्डिल तुण्डिक शुभंयुः दन्तुर जङ्घाल दंष्ट्राल भुजाल पांसुल प्रज्ञाल प्रज्ञिल रजस्वल फेनिल वाचाल वाचाट मुखर पङ्किल इत्यादयो, विद्वन्नाम चौर महोत्साह उद्धत कोपन वैरङ्गिक कर्मशूर अलङ्कर्मीण कर्मठ धृष्ट सज्जन बन्धुगोत्रादीनां नामानि । एवंप्रकाराः शब्दाः लक्षणासाधका यथौचित्यं प्रयोज्याः । यथा—

विप्रोऽप्ययं द्रुतमहीनमहीनकीर्ति-
र्लुण्टाकशक्तिरपसादगुरुप्रसादः ।
वेध्यं प्रपातयति पश्यत रे नरेन्द्राः !
कीर्तिं स्मरन्मनसि गौररुचं न कृष्णाम् ॥

इति श्रीजिनदत्तसूरिशिष्यमहाकविपण्डितश्रीमदमरविरचितायां कविशिक्षा-
वृत्तौ शब्दसिद्धिप्रताने लाक्षणिकः स्तबकश्चतुर्थः ।

---

सम्पूर्णश्चाऽयं शब्दसिद्धिप्रतानो द्वितीयः ॥

---

## अथ श्लेषसिद्धिप्रतानः ।

तत्र पूर्वं श्लेषव्युत्पादनं यथा—

वर्णाकारक्रियाधाराधेयसम्बन्धिबन्धवः ।
द्विरूपत्नीप्रियसम्पर्किस्वामितुल्यगुणादयः ॥ १ ॥
एषां स्यान्नामभिः श्लेषो नानार्थैर्वर्ण्यवस्तुनि ।
भङ्गश्लेषोऽधिककसन्मुख्यैः पूर्वाग्रगैः पुनः ॥ २ ॥

वर्ण्यवस्तूनां वर्ण्यादिनाम्नां मध्याद्यन्नाम द्व्यर्थं त्र्यर्थं नानार्थं वा भवति तेन नाम्ना श्लेषः कार्यः । यथा धवलार्जुनहरिगोप्रभृतयः शब्दाः । भङ्गश्लेषस्तु वर्ण्यवर्ण्यादिनाम्नः पूर्वगतैरधिकादिभिरग्रगतैः कसदादिभिः सामान्यशब्दैरर्थे मिलति यथासंभवं कार्यः । यथा कमलशब्दस्य मल इति अग्रेतनाक्षरार्थे मिलति पूर्वाक्षरकस्त्रोट्यते । यथा—'अधिकमलशली' । अधिकशब्दः सामान्यः । तथा करकशब्दस्य कर इति पूर्वाक्षारार्थे मिलति उत्तराऽक्षरकस्त्रोट्यते । यथा 'करकसल्लक्ष्मीः' । कसच्छब्दः सामान्यः ।

पूर्वं पूर्वाक्षराणां त्रोटनाय पूर्वप्रयोज्याः सामान्यशब्दा यथा—

अधिकस्वकस्वकीयकसश्रीकाः सुखसुगौ पुरोगश्च ।
ज्ञेयाः समानोच्चसदास्वच्छाः सदाच्छसज्जौ च ॥ ३ ॥
तज्ज्ञाभिज्ञसुखज्ञाः शोभितविभ्राजितादयः स्वस्थः ।
सुखदं तद्वद् शोभा बद्धसौन्दर्यप्रभृतितो बद्धम् ॥ ४ ॥
सम्पन्नसुशोभनलोलुपसम्पन्नवसगौरवमहाभाः ।
बहुशोभनसदाशुभबहुभाः परमसमानयामनोहृद्यम् ॥ ५ ॥
पीवरसुरुचिरमधुरा मञ्जुलपृथुलौ स्वभावतः शंश्च ।
सुमुखदशः समहासः ससमग्रहपरमहौ च बहुलक्षः ॥ ६ ॥

एतैः शब्दैः पदानां पूर्वाक्षराणि त्रोट्यन्ते । यथा— सश्री-क-पालिस्थितिः कैलासः, सरोवत् । स्व-क-लङ्काभोगः शशी, रावणवत् । सु-ख-रोचितः कुलालः, सुकृतिवत् । सु-ख-लीनस्तुरगः, सुकृतिवत् । सु-ख-द्योतस्तपास्ययो, नृपवत् । पुरो-ग-बलस्थितिः सारङ्गधनुः, मल्लवत् । समा-न-व-न-र-स-भा-सितं सरो, नृपवत् । उ-च्चा-मरश्रीः नृपतिः, इन्द्रवत् । सदाऽच्छ-गणराजितं गोस्थानं, रुद्रस्थानवत् । स-ज्जं-वी-रगणं बिभ्रत् वनं, नृपवत् । अभिज्ञातिस्थितिः कुलीनो, विदग्धगोष्ठीवत् । शोभि-त-रङ्गान्वितो जलधिः, नटवत् । स्वस्थपुटताशाली शैलमार्गो, मृदङ्गवत् । सुख-दा-नस्थितिः वदान्यः, शाकटिकवत् । शोभाबद्ध-बलान्वितो रुद्रो, नृपवत् । सुशोभ-न-गरस्थितिः सुनृपः, शिवकण्ठवत् । लोल-प-वन-स्थितिः सागरतरङ्गो, गिरिवत् । सम्प-न्न-व-सुधाभोगः पार्थिवः, सुरवत् । बहु-शो-भ-वनान्वितं पुरं, गिरिवत् । परमहेलाशाली द्वेधापि कामुकः । मनो-हृ-द्यो-धस्थितिः युद्धभूमिरिव धेनुवत् । सुरुचि-र-मणीरमणीयः पाणिग्रहमहो, रोहणवत् । पृथु-ल-क्षणं गृहं, चन्द्रवत् । स्वभावशरणधुरीणो द्वेधा सुभटः । सम-हास-कलः सज्जनः, पूर्णिमेन्दुवत् । परम-हृ-सितश्रीः एकृती, शिववत् । बहुल-क्ष-पणं

जैनदर्शनं, कुक्कुटायोधनवत् ।

एवमन्यस्वरान्तैरपि सामान्यशब्दैः श्लेषः । यथा—सदा-रो-पचितो युवा, धनुर्धरवत् । बहुधा-न्य-पुष्टश्रियान्विता शरद्, वसन्तवत् । अग्र-तो-रणशोभं देवगृहं, भटवत् ।

अथाऽन्त्याक्षरत्रोटनायाऽन्त्यप्रयोज्याः सामान्यशब्दा यथा—

कुलसत्करोचितकसत्कान्ताः कामात् क्रमादुदितः ।
कूटोपचितखरोचितखचितागतगाहितौ गुरूढश्च ॥ ७ ॥
गूढोगीतं घाटोपचितं घोरीकृतश्च घनवर्द्धि ।
वान्तश्चितश्च रोचितचक्राश्चितरोचिताश्च यतः ॥ ८ ॥
छुविराजितछविलासिप्रमुखाच्छलसच्छटोपचितौ ।
जाग्रगततोलसज्ज्ञातिज्ञातिज्ञानवर्धिनो ज्ञातम् ॥ ९ ॥
टोपतिरोहिततनतस्तारोचिततानवर्धितुवराः स्युः ।
तान्तस्ततस्तुतश्च स्थपुटस्थामोदितस्थिरचिताश्च ॥ १० ॥
स्थास्थितवर्द्धिकरोचितदान्ताश्चामोदितो दूरात् ।
धनवर्धिधरोचितधवला धामोदितो धुरीणश्च ॥ ११ ॥
धीरोचितो धनऽयासङ्गोऽनवसन्नवर्द्धिनऽयाप्ताः ।
नामोदितनियतोदितनिचितनिभासितनिकायनिहिताश्च ॥ १२॥
निकरनिवहौ च नियमो निचयनुतो न्यूनवर्द्धितो न्यस्तम् ।
प्रवरप्रमुखप्रकरप्रकामभारोचितप्रधानाः स्युः ॥ १३ ॥
प्रबलप्रसभप्रकटप्रभावपूतप्रभूतपिहिताः स्युः ।
पुरतः प्रियमोदितकप्राग्रप्रामोदितप्रकाराः स्युः ॥ १४ ॥
प्राग्रहरपीनवर्द्धिप्रस्तावप्रांशवः प्रकाशश्च ।
प्रविभासितः परोचितपिनद्धपरिवर्द्धिपरिचितस्फीताः ॥ १५ ॥
स्फारोचितश्च फलसद्धितऽनबलसद्धरोचितवलन्ताः ।
वामोदितो विरोचितवर्द्धिवसद्वासनाऽयाप्ताः ॥ १६ ॥
विपरीतविप्रकृष्टवरचिताश्च व्राततोऽव्यवहिताः स्युः ।
विलसितविकसद्धिचरद्धिभ्राजिभ्रासिकासिसमाः ॥ १७ ॥
विसरविमानवितर्का विशालविभ्रमविनोदविकटाः स्युः ।
विक्रमविकल्पविस्मयवीतव्यूढव्रजव्यूहाः ॥ १८ ॥
भासितभारोचितभानवर्द्धिभामोदितभ्रान्तिः ।
भासितभूरीकृतभावबद्धभूयोगतो भरचितश्च ॥ १९ ॥
उदितं भ्रमाद्धरोचितमहितो महसन्मदेशौ च ।
मधुरो मोहितमोदितमितो मतामानवर्द्धियतयाताः ॥ २० ॥
यानाद्धद्धीरमरामोदितजितरचितरोचितारूढम् ।
रोपचितरमोहितरूपचितलसल्लासितालवसत् ॥ २१ ॥
लातं लोभामितलीनवर्द्धिनो लूनवर्द्धी च ।

शतशकलशबलशान्ताः स्वकामसार्थौ स्वभावसमुदायाः ॥२२॥
समसीमोदितद्रङ्मोदितसितसारोचिताः सभासकलौ ।
सद्योतिसभाजनसारचितस्वेच्छास्वतन्त्राश्च ॥ २३ ॥
सततसमर्यादससीमसदेशसमानहासिता हारी ।
हृतं हितश्च हसितं हीनाद्दर्या हसंश्चापि ॥ २४ ॥
क्षिप्राग्रं च क्षुद्रव्याप्तं चैव क्षमोदितं क्षान्तम् ।
एते पुरतः शब्दा अन्येऽप्येवंविधा बुधैर्बोध्याः ॥ २५ ॥

एतैः शब्दैः पदानामन्त्याक्षराणि यथासंभवं त्रोट्यन्ते । यथा—फल-क-सल्लक्ष्मीः युद्धकारः; फलितद्रुमवत् । नर-का-न्तस्थितिर्विष्णुः, नृपवत् । शङ्कचिताटोपं बिभ्रच्छङ्ख-वादकः, पुण्यनरवत् । मु-द्रा-हितो मरुदेशः, पूर्णहितवत् । प्रियं गू-ढविभवं बिभ्रद्धनं, वेश्या-जनवत् । परि-घ-न-वर्द्धिस्थितिः पुरप्रतोली धर्मपरवत् प्रावृट्कालवद्वा । क-च-रोचिता वेणी, समुद्रवीचीवत् । तापि-च्छ-विराजितो वनोद्देशो, रविवत् । सदा-ग-जातिश्रीर्नृपो, वनवत् । रस-ज्ञा-नवधिस्थितिर्द्विरसनाधिपो, रसिकवत् । शृङ्गाटोपचितो वीरवर्गो, गिरिवत् । सुर-त-श्रियं बिभ्रद् वेश्यावर्गः, स्वर्गवत् । स्वस्थामोदितश्रीः सुरेन्द्रो, मल्लवत् । कलदान्तस्थितिः स्वर्णालङ्कारकारी, दक्षवत् । सुधा-मो-दितश्रीः स्वर्गो, रवि-वत् । उपाय न-वसल्लक्ष्मीर्द्वेधा नृपः । कच्छ-प-रचितश्रीर्जलाशयो, ग्रामवत् । अधिकफ-ल-सत्स्थितिर्वसन्तः, सस्वामिसेवावत् । केश-व-रोचितश्रीर्द्वारिकापुरी, सुकेशीवत् । कर-भा-चितो मरुदेशो, रविवत् । कल-म-हसल्लक्ष्मीः शरत्कालः, सपुण्यवत् । वलय तः-स्थितिं बिभ्रत् नारीप्रकोष्ठो, मल्लवत् । तिमि-रो-चितश्रीः कुहूः, समुद्रवत् । कुण्ड-ल-सल्लक्ष्मीः कपोलपाली, सुधावत् । मान-व-सत्स्थितिः मर्त्यलोको, मानिवत् । गिरिश-तः-श्रियं बिभ्रत् कैलासः, पृथ्वीवत् । मानस-मो-दितश्रीः श्रीदपुरीप्रदेशो, मानिवत् । कल-ह-सि-तस्थितिः नारदः, कामिवत् । वल-क्ष-मो-दितश्रीः हिमाद्रिः, शान्तवत् ।

एवमन्यैरपि सामान्यशब्दैः श्लेषः साध्यते—

अपूर्वश्चाऽद्वितीयश्चाऽमध्यमोऽनन्त इत्यपि ।
अमात्रो मात्राधिकश्चाऽतिक्रान्ताद्दलितक्रमः ॥ २६ ॥
केवलोऽथान्तरत्यन्तादिभ्यश्च पुरतो गुरुः ।
श्लेषमुत्पादयेदेतैः शब्दैरुपपदस्थितैः ॥ २७ ॥

क्रमेणोदाहरणानि—अपूर्वत्रिदशाभोगः, पक्षे दशाभोगः । सुमनः गीर्वाण वृन्दा-रक विबुध अमृत दानव मीमांसा पिनाक कुमार केशव कन्दर्प इत्यादिशब्दानामादौ अपूर्वशब्दः प्रयोज्यः ।

अद्वितीयकपालिश्रीः, पक्षे कलिश्रीः । अमर दानव स्वयम्भू आराम पिनाक वृषाङ्क कमल भास्कर इत्यादिशब्दानामादौ अद्वितीयाऽमध्यमशब्दौ प्रयोज्यौ ।

अनन्तदानवश्रीः—पक्षे दानश्रीः । दैवत असुर प्रजापति भारती मदन नन्दक इत्यादिशब्दानामादौ अनन्तशब्दः प्रयोज्यः ।

अमात्रकालस्थितिः, पक्षे कलस्थितिः । जार वार स्फार दार भार चार हार

इत्यादिशब्दानामादौ अमात्रशब्दः प्रयोज्यः ।

मात्राधिककेवलज्ञानः — पक्षे केवलाज्ञानः । कृपण कमल कल बल भर हर इत्यादिशब्दानामादौ मात्राधिकशब्दः प्रयोज्यः ।

अतिक्रान्तक्रमभारतीस्थितिः, पक्षे तीरभास्थितिः । वलितक्रमपोतवैभवः, पक्षे तपोवैभवः । हर नन्दक वाल मार कर्तन सह भावि राजा भार्गव धारा लङ्का रसा दिवा दीन नीलिमा राक्षस रुत चारु पुत्र शाप भान पात्र रद कपि छग वलभी इत्यादिशब्दानामादौ अतिक्रान्तक्रम,वलितक्रमशब्दौ प्रयोज्यौ ।

केवलकोरकस्थितिः, पक्षे करकस्थितिः । कम्बल कोमल दाव प्रमोद इत्यादिशब्दानामादौ केवलशब्दः प्रयोज्यः । अन्तर्गुरुकृपणस्थितिः, पक्षे कृपाणस्थितिः । शरज प्रमद निकर विकर इत्यादिशब्दानामादौ अन्तर्गुरुशब्दः प्रयोज्यः ।

अन्तगुरुकमलस्थितिः, पक्षे कमलास्थितिः । पद्म राम वाल वाम इत्यादिशब्दानामादौ अन्तगुरुशब्दः प्रयोज्यः ।

आदिगुरुबलस्थितिः, पक्षे बालस्थितिः । वर कल दह हर वर इत्यादिशब्दानामादौ आदिगुरुशब्दः प्रयोज्यः ।

अथ वर्णाक्षेपेण श्लेषप्रकारान्तरमाह—

क्रमतोऽपूर्वोऽर्चिताचितासितावाहितोहितोरूढाः ।
उद्द्योतिकान्तिकासितकामोदितकुलसिताः कसंश्चापि ॥ २८ ॥
उदितं क्रमाच्च कूटोपचितं खचितं सुखं पुरोगचितम् ।
गाहितगुरूढगूढघनवर्द्धिघोरीकृता ज्ञेयाः ॥ २९ ॥
घाटोपचितोच्चरोचितचक्राश्चितकरोचिताश्चान्तम् ।
छविराजिमुखाश्च लसन् सज्जं जालोचितश्च जातियुतः ॥३०॥
ज्ञानाद्यर्द्धी टोपचिततिरोहिततानवर्द्धिनो बोध्याः ।
तारोचितस्थिरोचितस्तिरोहितस्थानवर्द्धिनो ज्ञेयाः ॥ ३१ ॥
स्थामोचितदूरोचितदान्तो धीरोचितश्च धनवर्धी ।
धामोदितो धरोचितनव्याप्तनिचितनवर्द्धिनियताश्च ॥ ३२ ॥
निहितनिबद्धपरोचितपिहितपिनद्धप्रभासितप्रमुखाः ।
प्रान्तप्रकटप्रवरप्रमोदिताः पीनवर्द्धी च ॥ ३३ ॥
पूरोचितप्रमोदितप्राग्रप्रभासिताः स्फुटोपचितम् ।
स्फारोचितश्च फलसद्भिलसद्बामोदिता वसद्व्याप्तौ ॥ ३४ ॥
विपरीतविकटसम्पन्नविभासितवरोचितव्यूढाः ।
विप्रोत्कृष्टोद्भासितभारोचितभानवर्द्धिभूव्याप्ताः ॥ ३५ ॥
भासितभीमोदितमोहितमहसन्मानवर्द्धिनो ज्ञेयाः ।
यानाद्यर्धी रोचितरचितो रोपचितरूढरूपचिताः ॥ ३६ ॥
रामोदितलसितलसल्लाभाश्रितलूनवर्द्धिनो लवसत् ।
लीनाद्यर्धी शुभ्राजितशकलशुभासिताः सुशोभश्च ॥ ३७ ॥

सहसितसततसमोहितसारोचितसोमोदिताश्च सद्द्योतौ ।
सबलं हासितहीनावर्द्धितिप्राग्रक्रमोदितकाः ॥ ३८ ॥
शब्दैरेभिरपूर्वाद्यैः पूर्वभागप्रयोजितैः ।
शेषाय शब्दमध्येषु निक्षिपेद्वर्णमण्डलीम् ॥ ३९ ॥

यथा—अपूर्वछरस्थितिः, पक्षे असुरस्थितिः । अचितगजयुतः, पक्षे अङ्गजः । आचितखेटकशोभी, पक्षे आखेटकः । उद्योतिपरागपूर्णः, पक्षे उपरागः । कामोदितसरःस्थितिः, पक्षे कासरः । एवं सर्वत्र । खचितद्योतयुतः । गाहितजारोहः । घनवर्धिस्मरः । वरोचितपलश्रीः । छविराजिगणः । जालोचितघनः । पुरोज्ञानवर्द्धिरसप्रसरः । अग्रेसदाटोपचितकरश्रीः । तारोचितरणश्रीः । स्थामोदितपुटः । दामोदितनवश्रीः । धरोचितवलः । नव्याप्तक्षत्रराजी । परोचितवनशोभी । प्रमोदितकटस्थितिः । स्फुटोपचितरणश्रीः । व्याप्तपक्षस्थितिः । वामोदितमनःस्थितिः । भारोचितरतश्रीः । महसत्सूरशोभी । यानवर्द्धिबकस्थितिः । रचितमणीभासुरः । लसितगुडरम्यः । शकलयुक्तः । सततगोत्रस्थितिः । पुरोहसितपटयुक्तः । क्षमोदितपणस्थितिः ।

एवं वर्णक्षेपकशब्दा अन्येऽप्यूह्याः । यथा—कोपपद टोपपद रोपपद लोपपद कूपपद भूपपद यूपपद रूपपद ।

तथा कराजिरकान्तारादिशब्दानामग्रेऽजितशब्दः प्रयोज्यः । यथा—कराजिताद्याः ।

कविछविरविप्रमुखाः, तथा नीवी अटवी ; मुख्यविकारान्तवीकारान्तादिशब्दानामग्रे आप्तशब्दः प्रयोज्यः । यथा—छव्याप्तनीव्याप्ताः ।

तथा अवर्णोपलक्षितरेफान्तशब्दानामग्रे उपचितोपयुक्तशब्दौ प्रयोज्यौ । करोपचितः । वरोपयुक्तः । जरोपयुक्तः ।

उवर्णोपलक्षितरेफान्तशब्दानामग्रे उपचितोपयुक्तशब्दौ प्रयोज्यौ । यथा—तरूपचितः । मरूपयुक्ताः ।

अथ वर्णाकर्षणेन श्लेषप्रकारान्तरमाह—

अकाऽर्काऽगाऽग्र्याऽग्राऽघाऽर्घाऽर्घ्याऽर्चाऽर्च्याऽर्चिरच्छाजाः(?) ।
अज्ञाऽटाद्याऽट्टाऽण्यणवत्राऽर्त्यतोऽत्यथार्थोऽथो (?) ॥४० ॥

अक अर्क अग अग्र्य अग्र अघ अर्घ अर्घ्य अर्चा अर्च्य अर्चिः अच्छ अज अज्ञ अट अद्य अट्ट अणि अणु अत्र अर्ति अतः अति अथ अर्थ अथो ।

अदोऽद्रिरब्दोधोर्द्धाब्धवाध्यनोऽन्वन्या अपाप्यवि ।
अर्वाबाभ्यभ्राम्यमू (?)अमार्यायेऽयमय्ययाः ॥ ४१ ॥

अदः अद्रि अब्दः अधः अर्ध अब्ध अधि अनः अनु अन्य अप अपि अवि अर्व अव अभि अभ्र अमी अमू अमा अर्या अये अयम् अयि अयः ।

अरमरुररेर्यराख्राल्पाल्यलमश्वाश्रवोऽश्रिरसौ ।
अश्राऽस्वहो अहरहमर्हाह्यक्ष्यक्षा विवर्जितविहीनौ ॥ ४२ ॥

अरम् अरु अरे अरि अर अस्र अल्प अलि अलम् अश्व अश्रु अश्रि असौ अश्र अस्व अहो अहः अहम् अर्ह अहिः अक्षि अक्ष ।

अखिलान्यूनाजस्रानन्ताभीक्ष्णयाधिकापरापाराः ।
अतुलानेकानल्पाशेषासक्तानघामदादभ्राः ॥ ४३ ॥
अहहामरासुराद्या इत्याकारादयो हि ये ।
योजयेत् तान् यथौचित्यं वर्णाकर्षणहेतवे ॥ ४४ ॥

एते ह्यन्येऽपि द्व्यक्षरास्त्र्यक्षराश्चतुरक्षरा वा अकारादयः शब्दानामादौ वर्णाकर्षणाय प्रयोज्याः, श्लेषो भवति । यथा-अकमलशाली, पक्षे मलशाली । अच्छगण-शाली, पक्षे गणशाली । अक्लेशयुक्तः, पक्षे केशयुक्तः । इत्यादिशब्दा ज्ञेयाः ।

कर्कीकुकूखखुगगौघोचचाचिचयस्तथा ।
ज्ञातातीस्थिददादूधधीननीपापपौपुपू ॥ ४५ ॥
स्फस्फावावीववेवैभभामारोशूशसासस्रू ।
सीहहाहीज्ञत्ताक्षीत्तौ एतेषां रहितः पुरः ॥ ४६ ॥

एतेषां वर्णानामग्रे रहितशब्दः प्रयोज्यः । करहितकीरहितेत्यादि । एतैः शब्दै-र्वर्णा आकृष्यन्ते । करहितकमलशाली, पक्षे मलशाली । कीरहितबन्धुकीयुतः, पक्षे बन्धुयुतः । इत्यादि ज्ञेयम् ।

स्मेरज्वरस्वरस्मरद्वारस्थावरतुषारमुख्यानाम् ।
पारावारादीनां रान्तानामग्रतो हितो योज्यः ॥ ४७ ॥

यथा—स्मेरहित, ज्वरहित इत्यादि । स्मरहितस्मरणशाली, पक्षे रणशाली । इत्याद्यूह्यम् । एवमन्येऽपि शब्दाः । यथा-अहीनम्, अलङ्कृतम्, नूनम् ।

लकारान्तलाकारान्तशब्दानामग्रे उपयुक्तः शब्दः प्रयोज्यः । जलोपयुक्तः बिलोप-युक्तः कलोपयुक्तः वेलोपयुक्तः ।

आकारोपधपकारान्तशब्दानामग्रे नोदशब्दः प्रयोज्यः, तथा उपपादकृतरचिता दिशब्दाः प्रयोज्याः । यथा—कृततापनोदः, रचितवापनोदः ।

अथ श्लेषसाधकाः ककारान्ताः ककारादिप्रमुखाश्च शब्दा लिख्यन्ते । यथा-

[ नाक निष्क पिक काक शुक बक पङ्क भेक धूक स्तोक अलीक पुलक अंशुक गर्भक ताटङ्क हंसक कृषिक कर्षक कौतुक श्यामाक नरक कलङ्क नन्दक तारक करक गुह्यक विपाक अलिक कटक स्थानक स्तबक बन्धूक गण्डक जाहक चन्द्रक तर्णक व्यलीक विटङ्क जालक स्वस्तिक मणिक पथिक हतक लग्नक नाविक गणक कविक सभीक अनीक फलक बन्धुक पृथुक दारुक जनक अम्बक तिलक अंशुक अलक नालिक रजक शालिक लुब्धक स्फोटक आर्द्रक माक्षिक पातक तलक उदक अधिक मस्तक वनौक अङ्गारक अपवरक उच्छीर्षक प्राघुणक वनोपक दौवारिक आरालिक प्रबोधक विशेषक भयानक रणरणिक वैकटिक । एषामग्रे-आकर कर कल करि कपि कवि कत्र कशा कन्या कर्ण कच कफ कच्छ कपालि कदर्य कपर्द कलङ्क कदली करञ्ज कपाल कलिङ्ग कपोत कपाट करभ कवच कदन कबरी कर्ण कज्जल कपोल कबन्ध कमठ कमल कदम्ब कपट करवीर कवन कम-ण्डलु करवाल कर्णधार कम्बु कङ्गु कण्डु कन्द कङ्काल कन्धरा कङ्कट कम्बल कन्दर

कन्दर्प कङ्कण केवलि कोल कोयष्टि कोप कौपीन केलि केतु केशव कोदण्ड केश केदार कोद्रव कैरव केसर ।

चक्र तक्र वक्र शक्र शुक्र नक्र शुक्ल । अग्रे-क्रोड क्रतु क्रव्य क्लेश क्रम क्रोधन क्रमेलक क्रकच ।

राका शङ्का कालिका बलाका बालिका ऊर्मिका नासिका तारका कृत्तिका उत्कलिका । अग्रे-कासि काष काकु काञ्ची काक काम कान्ता काण्ड कामि काच कारु कार काकोल कापेय कासर कानन कान्तार काञ्चन काश्यपी कारण कातर कासार ।

नाकि पिनाकि वातकि वर्द्धकि श्रीशृक्षकि प्रचलाकि । अग्रे-किल किरण किंशुक किसलय किङ्कर ।

शुकी पिकी बन्धकी वल्लकी आमलकी । अग्रे-कील कीर कीनाश कीलाल ।

काकु रङ्कु न्यङ्कु शङ्कु । एषामग्रे-कुल कुच कुश कुट कुक्षि कुम्भि कुण्ड कुन्त कुण्डल कुन्तल कुशीलव कुरबक कुलवधू कुलाल कुहर कुवेणी कुरङ्ग कुलीन ।

मुख मख पुङ्ख नख सुख दुःख शङ्ख । अग्रे-खर खनि खग खश खर्जु खल खलीन खद्योत खचित खण्ड खञ्जन खञ्ज ।

शिखा शाखा रेखा लेखा परिखा विशाखा । अग्रे—खानि खात ।

सखि सखी । अग्रे—अखिल खिल ।

आखु । अग्रे—खुर ।

तुङ्ग स्वर्ग रङ्ग मुङ्ग मङ्ग वङ्ग पूग खग छग छाग राग याग वेग रोग उरग नाग भोग युग पुरोग तडाग तरङ्ग पन्नग रथाङ्ग भुजङ्ग चतुरङ्ग अङ्गराग शताङ्ग अनुग भुजग अध्वग उत्तरङ्ग कलिङ्ग सारङ्ग । अग्रे—गदा गज गति गद्य अङ्गद गर्भ गद गरल गल गर गजराज गजारोह गङ्गा गण्ड गन्ध आगन्तु गोधा गौर गोसर्ग गौधेय गोधन गाङ्गेय गौरव ।

सरङ्गा आपगा निम्नगा । अग्रे—गान गात्र अगाध ।

भङ्गि भोगि । अग्रे—गिरि ।

भुजगी । अग्रे—गीति ।

पङ्गु कंगु प्रियंगु । अग्रे-अगुरु गुरु गुह ।

आगू । अग्रे-गूढ गूढ़ गूहनम् ।

आगः रुग् वाग् त्वग् स्रग् ईदृग् प्राग् अवाग् द्राग् । अग्रे-अग्नि ।

अग्र व्यग्र समग्र उदग्र मण्डलाग्र । अग्रे-ग्राव ग्राम ग्रीवा ग्राह ग्रामणी ।

अघ मेघ सङ्घ उङ्घ परिघ । अग्रे-घन घोर अघ घस्मर घनरस ।

जङ्घा । अग्रे-घाट घास ।

व्याघ्र । अग्रे-आघ्राण ।

प्राज्ञ यज्ञ अभिज्ञ क्षेत्रज्ञ दैवज्ञ प्रज्ञा अवज्ञा प्रतिज्ञा रसज्ञा । अग्रे-ज्ञाति ज्ञानि ज्ञान ।

नीच काच कुच कच उच्च रोमाञ्च वचस् । अग्रे-चक्र चय चमू चर चरु अचल आचमन चरण चपल अञ्चल चञ्चल चल ।

चञ्चु वञ्चु चञ्चु तञ्च । अग्रे-चारु चाप चामुण्डा चारण चामर चारित्र ।

शुचि रुचि । अग्रे-चित्या चिता आचित चिद्रूप ।

काञ्ची वीची शची प्राची विपञ्ची घृताची । अग्रे-चोर चीवर ।

चञ्चु पिचु । अग्रे-चुम्बक ।

चञ्चू । अग्रे-चूडा चूत चूर्ण ।

पिच्छ पुच्छ गच्छ गुच्छ स्वच्छ तुच्छ । अग्रे-छवि छल छत्र छग छद छगल अच्छभल्ल ।

मच्छ इच्छा वाञ्छा । अग्रे-छात्र छाग छादन ।

मुञ्ज गुञ्ज अण्डज राज वाज ध्वज भुज खञ्ज बीज अम्बुज व्रज व्याज लाज मुरज करञ्ज नीडज आत्मज उरसिज क्षतज समाज गजराज सरसिज मलयज । अग्रे-जल जन जपा जम्बा जथ जरा जगत जङ्घा जम्बीर जंबाल जगति जवन जगर जघन अजगर जवनिका ।

रुजा लज्जा भुजा प्रजा गिरिजा । अग्रे-ज़ाहक जार जाति जात जाया जाल जागुड जाबाल जागर जालक जातरूप जातमात्र ।

राजि आजि वाजि वनराजि । अग्रे-अजित जित जिन ।

राजी । अग्रे—जीवन जीव जीरक जीवा ।

ऋजु । अग्रे-ज्वाला ।

झञ्झा । अग्रे-झष झम्पा झावुक ।

वात वीत भूत पित्त गीत चूत मत्त गर्त्त धूर्त्त भीत अहित मुक्त कुन्त सुत तात दन्त चित्त प्रोत जात नत द्रुत अश्रान्त आचित एकान्त श्वेत सित पीत सङ्गीत प्रभात अनृत हरित पर्वत राजत कद्रुत दुर्गत उत्कण्ठित उपवीत लम्बित विधौत पदात सैकत प्रपात निशात निशित शुद्धान्त सामन्त हसित सुरत मणित नापित भरत पारत चेष्टित विभात ऊचित उन्नत आयत ऐरावत नवनीत प्रक्षालित अपहस्तित अपवारित अनवरत । अग्रे—तपतर तनु तनू अन्तर तरी तमी तम तरु तर्क इतर तन्त्र तण्डुल तत्पर तनय आतपत्र तरङ्ग तडाग तमिस्रा तर्णक तरुण तरङ्गिणी तरुषण्ड तरवारि तोरण तेजित तोय ।

मरुत् हरित् शरत पतत् उपानत् उपविशत् असहत क्षुत द्विपत् सर्पत् शश्वत् बृहत् संवत चिता कान्ता लता वासिता देवता वनिता उपसाता । अग्रे-तात लात ताम्र तापिच्छ ताटङ्क ताम्बूल ताम्रचूड तामरस ताडपत्र ।

कृत्ति श्रुति ज्ञाति पत्ती हेति व्रति यति मति गति जाति रीति क्षिति स्तुति रति धृति नुति नति भ्रान्ति दुर्गति कण्डूति अराति पदाति पक्षति व्रतति श्रान्ति विप्रीति आज्ञापति प्रजापति ध्वाङ्क्षाराति अभिजाति । अग्रे-तिल तिमि तिमिर तिरोहित ।

छत्र छात्र मित्र पुत्र पत्र गात्र श्रोत्र यन्त्र नेत्र गोत्र पात्र यत्र अत्र तन्त्र दात्र वेत्र अरित्र क्षत्र पवित्र परतन्त्र ताडपत्र आतपत्र । अग्रे-त्रस्त अस्त त्रपु त्रपा ।

यात्रा वरत्रा । अग्रे—त्रास ।

रात्रि । अग्रे—त्रिक त्रिगुण त्रिफला त्रिशंकु त्रिदश ।

अमात्य नित्य वात्या चित्या । अग्रे—त्याग ।

सत्त्व । अग्रे—त्वरी ।

सती अदिति वासन्ती मालती भारती युवती । अग्रे-तीर तीव्र ।

सेतु केतु हेतु क्रतु आगन्तु धातु । अग्रे—तुष तुच्छ तुला ऋतु तुहिन तुवरी तुरग तुरङ्गम तूर्ण तूल तुङ्ग तुन्द ।

नद नाद कन्द छद मद मन्द सूद क्षोद गुद बुदअ क्रुद अगद स्वेद भेद छेद स्कन्द धनद प्रसाद स्वच्छन्द दोहद कलाद विनोद मकरन्द अरविन्द । अग्रे—देव दम दनु दरी दम दल दक्ष दशा दह दश दर दया उदक उदधि उदग्र अदभ्र दर्भ दक्षिण नद रद दहन दम्भ दण्ड दण्डि दन्त दोला देह देश देव दास दोष दौवारिक ।

गदा गोदा सदा सर्वदा क्षणदा नर्मदा । अग्रे—दानव दारुण दान्त दास दाम दान दासी दार दात्र ।

नन्दि बन्दि आदि सादि मांसादि हीनवादि । अग्रे-दिन दिवा दिवस दिति आदि आदित्य आदिम ।

वेदी नन्दी कालिन्दी । अग्रे—दीन दीप दीक्षित उदीरण ।

कन्दु विन्दु इन्दु । अग्रे-दुली दुस्थ दुःख दुहिता दुकूल ।

अन्दू । अग्रे-दूर दून दूरमणी ।

पाद साद रुद्र मद्र भद्र क्षुद्र शूद्र दद्रु छिद्र सान्द्र हारिद्र दरिद्र वैद्य सद्य । अग्रे—द्वार द्युति द्रव्य द्राक्षा द्विपि द्वीपि द्विरद द्रुत द्रोह द्विषत ।

बुद्ध युद्ध क्रोध व्याध आयुध अगाध न्यग्रोध समिद्ध अविद्ध अवरोध अपरोध अपविद्ध । अग्रे—अन्ध धन धरा ऊधः ऊधस्य अधः धेनु धनुः अन्धः धव धवल अधर धाराधर ।

सन्धा क्षुधा मेधा गोधा सुधा अभिधा द्विधा राधा अभिधा । अग्रे—धाना धान्य धातु धार आधार ।

उदधि व्याधि आधि अवधि निधि सन्धि विधि । अग्रे-अधिप अधिपति अधिभू अधिकृती अधिरोहिणी ।

सुधी । अग्रे—धी धीर धीवर अधीश ।

सिन्धु अन्धु सीधु साधु विधु । अग्रे—धुनी धुर्य धुरीण ।

वधू । अग्रे—धूप धूली धूसर धूमयोनि ।

अध्वरन्ध्र साध्य । अग्रे—ध्वान्त ध्वान ध्वाङ्क्ष ध्वनि अध्व अधि अध्यक्ष ध्वाङ्क्षाराति ।

घन धन जिन गान दिन ध्यान वन दान जन पीन हीन दान स्नान यान अञ्जन मीन फेन भुग्न मान उन्न सन्न स्तन अनः धनुः मनः एनः ग्रथन कर्तन कल्पन समान आसन्न पाठीन तुहिन अजिन वामन जीवन मोहन दर्शन रदन आलिङ्गन मण्डन

नग्न आनन सूदन प्रस्थान वाहन स्यन्दन उपायन स्पर्शन अपान शालीन क्रोधन सज्जन कोपन जनन आसून आसन उल्लोचन आयतन ईशान मदन प्राचीनः मञ्जन छदन दशन आलीजन जघन खञ्जन मन्थन बन्धन भवन मोहन अवन ध्वान प्रतिमान नरवाहन वातायन वेत्रासन अध्वनीन अभिवादन सिंहासन व्यापादन आच्छादन सारसन निभालन। अग्रे—नभ नग नर नल नख नक्र नदी नद नत नव नव्य नेत्र नेपथ्य एनः नौ नर्मदा नक्षत्र नखर आनन नगर नरदेव नवनीत ।

अवधान ध्यान धाना अङ्गना मेना वासना देशना यातना रसना प्रार्थना घटना वर्णना पूतना । अग्रे—नाग नाश नाशा नारी नाम नाद नाना नाहल नारद आनाय नासिका नाविका ।

मुनि ध्वनि अवनि खनि खानि अटनि योनि धूमयोनि। अग्रे—निशा निधि अनिश निभ निश्चय नित्य निर्वेद निहित नितान्त निबद्ध निखिल निश्चित निकार निरस्त निचित निवह निकाय निधन निकर निरय निहान निध्यान अनि निमिष निखात निदाघ नियति निकुञ्ज निगड निलय निश्रेणि निकेतन निवसन निभालन निरवग्रह ।

धुनी जननी वनी जनी कठिनी कामिनी भामिनी सेनानी वर्द्धिनी दामिनी भवानी मानिनी वाहिनी । अग्रे—नीर नीवी नीली नीप नीव नीध्र अनीक नीहार नीवार ।

जानु तनु सूनु सानु भानु दनु कृशानु । अग्रे—नुति अनुग अनुक्रम अनुपदी अनुचर अनुशय अनुकूल अनुताप अनुक्रोश अनुजीवी ।

तनू । अग्रे—नून नूतन नूपुर ।

धन्य धान्य स्तन्य शून्य राजन्य कन्या । अग्रे—न्यस्त न्यास न्यङ्कु न्यञ्चित न्यग्रोध ।

शाप पुष्प सर्प द्विप पुप तूप रूप कूप भूप सूप चाप वाप ताप पाप विलाप कच्छप लोलुप अधिप मण्डप मधुप कलाप पादप्र अङ्घ्रिप अनेकप अवलेप अन्तरीप उपलाप उपजाप । अग्रे—परु पर्ण पशु पवि पशुपति पक्षि पक्ष पल्ली पर पति पल पक्ष पयः पत्रि पत्र पवन पल्लव उपहास उपक्रोश अपवाद उपकार पयोद पक्कण उपचार उपधान उपवीत उपपत्ति उपसर्प उपयाम पयोधर उपयाम अपवरक परवश परतन्त्र अपत्रप उपताप उपजाप उपचर्या परेत पन्नग आपगा उपकण्ठ अपविद्ध उपक्रम अपदेश अपज्ञान अपकार परुष अपवारित अपहस्तित पङ्गु पङ्क पद्म पञ्जर पांशु पांसुल पेशल पौरोगव पञ्चानन ।

वपा त्रपा प्रपा जपा क्षपा शिंशपा अपत्रपा । अग्रे—पाप पाणि पात्र पामा पाशा पाली उपान्त उपाधि उपानत् पाताल पार्थिव पामर अपान पावन पावक उपायन पार्वती पाणिग्रह पारिजात पादरक्षण पारिरक्षिक ।

कपि लिपि द्वीपि कलापि । अग्रे—पिक पिच्छ पिशित पिधान पिचु पिप्पल पिनाक पिशङ्ग विहित पिनद्ध पिङ्गल पिण्ड ।

वापी काश्यपी । अग्रे—पीनः पीडा पीत पीवर पीठ आपीड ।

रिपु ऋपु वपु । अग्रे—पुन्नाग पुष्कर पुष्प पुर पुरा पुट पुत्र पुरी पूर पूत पूल पूज्य अपूप पूः पून पुनः पुरुष पूजि पूजित पूरित पूर्णायुः ।

वप्र विप्र क्षिप्र क्षुरप्र कम्प्र । अग्रे—प्रहर प्रदोष प्रहेला प्रस्थ प्रस्तर प्रताति प्रवासित प्राजन प्राग्र प्राज्य प्रस्तावन प्रग्रह प्रकाण्ड प्रवाल प्रहार प्रान्तर प्रजा प्रकार प्रपा प्रमदा प्रकृति प्रमुख प्रभूत प्रांशु प्रपञ्च प्रकोष्ठ प्रच्छद प्राज्ञ प्रवीण प्राकृत प्राघुणक प्रार्थना प्रेत प्रवर प्रकाम प्रकर प्रभावती प्रिय प्रधान प्राभृत प्रबोधिक प्रधि प्रस्थान प्रधन प्रास प्रवह प्रकट प्रचार प्रतिलोम प्रसभ प्रतारण ।

शिव भव देव दाव हाव जीव स्तव ग्राव पीव आजीव क्षीब जव आहव धव रव लव नव पूर्व दानव वाडव केशव वासव विभव ताण्डव पणव शराव मानव पार्थिव बल्लव नरदेव पौरोगव कुशीलव बान्धव राजीव गौरव श्रव । अग्रे—बक वशा वय अवधि वपु वसु अवनि वल्ली वलि बल वधू अम्बर अम्बक वस्त्र वपा वसा वर आवली अवज्ञा वनौकः अवयव वर्द्धनी वसुधा वकोट बदरी बकुल वत्सर वषट् वडवा अवस्कन्ध अवरोध वदन वलय अवकीर्ण अवलेप अवलक्ष अवसर वर्तुल वनराजि वर्धमान वसुमती वनीपक आवरण ।

रेवा ग्रीवा जीवा दिवा वडवा । अग्रे—वारी वार्ता वात्या वात वायु वामा वादे वाजि वाह बाल बाहु वास वारि वार वाम वातरोगी बाध वासना वामन बान्धव बालक आवास वानर बालिश वाहिनी वासिता वागुरा वारण वानीर वाडव आवाल ।

अवि कवि रवि पवि मेधावि मायावि । अग्रे--विप्र विश्व बिरु विधु विस्ता विधि अवि बिन्दु बिस वितर्क विटङ्क विदेह विगान विबुध विशाख विकल्प विशाय वियोग विश्वास विपरीत विसर विपक्ष विग्रह विकल विदग्ध विरोधि विवाह विभीत विवर विभ्रम अविरत विशाल विनोद विक्रम विरह विहार विकट विदुर विचिकित्सा विवरण विरोचन विनायक विचक्षण वितरण विकर्तन विशारद ।

नीवी पदवी अटवी देवी । अग्रे--वीर बीज वीची वीरुध् ।

अम्बु कम्बु अलाबू जम्बु । अग्रे--बुध बुस ।

द्रव्य भव्य गव्य हव्य तीव्र क्रव्य सव्य मृगव्य शरव्य । अग्रे—व्याज व्रात व्रज व्याल व्याधि व्रती व्याघ्र व्योम व्याहर व्याकुल व्रतति व्यजन व्यञ्जन वाञ्छा आवेश वेग वेदी वेश वेष्टित विकक्ष वेत्रासन वैश्रवण वैतालिक वैकटिक वैरोचन ।

दम्भ निभ आरम्भ शुभ डिम्भ आलम्भ वल्लभ लोलभ करभ करम्भ वृषभ कलभ शलभ उपालम्भ नभः । अग्रे—भव भर भस्म भय भद्र भव्य इभ उभय भरत भक्षण भवन आभरण भासित भविक भयानक भोजन भोगि अम्भ भैरव भङ्गि भेद ।

शोभा सभा रम्भा विभा प्रभा जम्भा प्रतिभा । अग्रे--भाजन भानु भाषा भार्या भामिनी भारती भारत भावुक ।

नाभि कुम्भि सुरभि । अग्रे--भिल्ल भिक्षु भिक्षा भिदा अभिधा अभिज्ञा अभिजाति अभिभव अभिनय अभिप्राय अभिवादन ।

वलभी अतिभी । अग्रे--भीम भीरु भीत आभीर ।

विभु प्रभु शम्भु । अग्रे—भुज भुजा भुवन भुजङ्गम ।

अतिभू प्रतिभू सहभू भू । अग्रे—भूत भूमि भूरि भूत भू ।

स्वभ्र शुभ्र अदभ्र वभ्र लभ्य । अग्रे—अभ्यास भ्रान्ति भ्रकुटि भ्रुकुटि भ्रमि भ्रम भ्रमर ।

काम सोम धूम वाम लोम नाम हेम द्रुम ग्राम सीम दाम पद्म अधम क्षम रोम क्षौम महिम सद्म स्तोम धाम सम युग्म भीम क्षाम स्थाम आदिम आयाम मध्यम विषम कलम उद्याम आराम अर्यम प्लवङ्गम भुजङ्गम तुरङ्गम । अग्रे—मस्तु मति मख मनः मल महः मद्र मघुः मरु अमर मोक्ष मेरु मेधा मौलि मांसादी मेखला मोहन मोदन मेघ मण्डन मङ्गल मद्गु महानिशा महानस महाबल महासेन महाध्वज मलयज मदन मनुज मत्सर महिला मसूर आमय मरण मकर मधुर मङ्क्षु मन्द मन्द्र मञ्जीर मन्दार मण्डल मन्दुरा ।

यामा रामा वामा क्षमा रुमा उमा सीमा । अग्रे—मानस माया माला मास माक्षिक मालिक मारण मानव मार्जन मार्ग मारुत मातलि मार्तण्ड अमात्य ।

तिमि कामि स्वामि भूमि । अग्रे—मिष आमिष मित्र ।

तमी शमी । अग्रे—मीन मीमांसा ।

चमू । अग्रे—मूक मूढ मूल ।

भय रय लय प्रिय हय काय तोय चय नय हृद्य अहाय आलय आम्नाय आमय आनाय अङ्गुलीय उत्तरीय अन्तराय वलय विलय विषय कुलाय गाङ्गेय समुदय । अग्रे—यम यक्ष यति यज्ञ यशः यज्वा आयत अयः ।

वयः पयः । अग्रे—योग योध योनि आयोधन ।

दया जाया माया मृगया । अग्रे—यादः यात्रा यान याग याम आयाम यावक ।

मायु मयु वायु मृगयु शुभंयु अहंयु । अग्रे—युग युगल युव आयुध युगन्धर ।

सुर पुर अमर असुर अधर हर नर स्मर चर चार कर खुर पर वीर सूर नीर तीर आभीर गम्भीर आहार द्वार क्षार क्रूर धीर वर जार दूर हार वैर शर दार वीर सार अक्षर अन्तर दर अम्बर स्थिर गर पूर आधार चार वार अधीर गौर आचार बन्धुर कडार पाण्डुर अनादर सत्वर सुन्दर रुचिर मधुर उत्कर विसर कुलीर अकूपार तुषार शिशिर रुधिर बधिर शबर वटार कोटीर शेखर अलङ्कार कूर्पर अधर उदर कुटीर मुद्गर मुखर नखर समर सङ्कुर अनुचर वत्सर कूबर मन्थर दासेर उदार इतर पीवर चतुर श्रृङ्गार नगर भ्रमर सिन्धुर कुञ्जर कान्तार आकार कन्दर मर्मर तिमिर वासर अङ्गार किन्नर समीर कोविदार कर्णिकार हयमार करवीर चकोर वैश्वानर पयोधर शतधार दामोदर प्रतीहार युगन्धर लिपिकर मणिकर पारावार नालिकेर । अग्रे—रवि रति रश्मि रक्षा रक्ष रव रय रथ रसा रक्त रस उरग रमणी रचित रहित रक्षित आरक्ष आरनाल आरभट रम्भा रङ्ग रंह रन्ध्र आरम्भ ।

मुद्रा जरा धारा तारा धरा कीरा पुरा धुरा धरा धारा शिरोधरा । अग्रे—राज राग राहु रामा राका रात्रि आराम राशि राजी राव राक्षस आराधन आरालिक राजीव

राजयक्ष्मा आरात्रिक ।

सूरि हारि वारि वैरि भूरि करि गिरि हरि अरि स्तम्बकरि तरवारि । अग्रे--रिपु अरित्र रिक्त अरि ।

नारी वारी तरी सुरी पुरी दरी शर्वरी करीरी बदरी कर्करी सुन्दरी नागरी गोदावरी । अग्रे—रीति ।

रुरु चारु कारु भीरु चरु परु तरु मेरु अगुरु शरारु वन्दारु । अग्रे—रुचि रुजा रुद्रक रुरु रुचिर रुषा रूप रूक्ष ।

नरः उरः सरः पुरः । अग्रे—रोधः रोम रोग आरोह रोमाञ्च ।

कल मूल पूल चल तल दल वल हल नल क्रोड कोल गण्ड तूल शाल उपल किल खिल अनल नाल चण्डमाल स्थाल भाल कुण्डल खल लोल आमल कुल शील वाल पिण्डगल तुण्ड मुण्ड चेल अञ्चल आपीड फल तिल बिल रुण्ड व्याल जल कूल जाल आकुल स्थल आवाल वर्तुल गल उच्चण्ड कराल शबल धूमल कपिल पिङ्गल श्यामल पटल पाटल धवल लगुड बहल सगल यमल मृदुल चपल चापल तरल चटुल पेशल मञ्जुल शैवाल गरल समल कङ्काल पाताल चण्डाल कुलाल वृषल लाङ्गल कुन्तल ताम्बूल मूकल त्रिकाल सरल जङ्घाल कुशल वत्सल छगल बिडाल मार्तण्ड मण्डल मङ्गल वल्कल पिचुल कूष्माण्ड करवाल आखण्डल अनाविल आलवाल महाबल । अग्रे लक्ष लव लता लक्ष्म लटा अलस लगुड लज्जा अण्ड अल आलय आलस्य आलवाल लक्षण ललाट लहरी ललाटिका लवणिमा लोह लोल लोहित लेश लेखा लम्पट लङ्का अलङ्कार लञ्चा लव डम्बर आलम्भ ।

वेला शाला शिला लीला कीला हाला लाला क्षाला क्रीडा पीडा माला तुला चूडा हेला दोला पांसुला कृष्णला वारला वरला अबला महिला निष्कला । अग्रे—लाक्षा लाज लाला लाव लाट लाभ आलात आलान अलाबू लाङ्गल लास्य ।

पालि मौलि केलि वलि कलि अलि दण्डि आलि शालि फालि दुलि दम्भोलि महाशलि । अग्रे—लिपि लिबि अलि अलिक आलि लिपिकर लिक्षा डिम्भ ।

पाली धूली नीली स्थाली वल्ली आवली पल्ली स्थली पली कली देहली खुरली पत्रपाली पत्रवल्ली नागवल्ली । अग्रे—लीला लीन ।

कलण्डलु कण्डू । अग्रे—लून लूता ।

दश कुश वंश केश पाश खश नाश लेश अनिश आवेश अधीश वश देश कर्कश बालिश कलश पलाश गिरिश ओषधीश परवश । अग्रे—शर शस्त्रिका शक्र शशी शची शत अशन शत्रु शय शकट शराव शरण शकुन्त शबल शकुन्ति शङ्का शङ्ख शवल शङ्कर शैल शोभा अश्र अश्रु श्मश्रु श्रग् ।

विश्व प्रश्न । अग्रे—श्रान्त श्रोत्र अश्व श्रवः श्रुति अश्रु शुभ श्वेत ।

दशा निशा आशा महानिशा । अग्रे—शारद शालि शान्त आशा शाल शाखा शाप शात शालीन ।

शशि वशि । अग्रे—शिव शिरः शिशु शिखा शिति शिरट शिखण्ड शिरोधरा ।

काशी आशीः । अग्रे—शील शीकर शीतल शीत ।

आशु शिशु पशु परशु । अग्रे—शुक शुभ शुचि शुभ्र अंशुक शूल शूद्र शूकर शूकल ।

विष तुष झष मिष आमिष महिष पुरुष । अग्रे—षडास्य ।

हास मास घास दास ध्वंस वत्स आवास अलस प्रास अंस मांस रस बिस त्रास विश्वास समास साध्वस मानस तापस लालस पायस सारस विलास राक्षस अन्धतमस कालायस कलहंस घनरस तामरस । अग्रे—सभा सती सव्य सद्यः असकृत् सम सदृक् सरः सस्य सखी सखि सव्य अंसल आसन सकल सत्वर सतत समान सघन सदन सजिन सनाभि सगोत्र सपिण्ड समास समूह समुद्र सत्तम सनीड सदेश समुद्र सभाजन सहृदय सगर्भ सत्रास सन्तत सन्देह संहति सन्दोह सङ्ग्राम संयम सन्दान सङ्कुल संवेग सम्भ्रम संरम्भ सन्धान सन्धा सन्धि सेतु, सैकत सेना सेवक सौवीर सोपान सोम ।

नासा हिंसा कासा रसा । अग्रे—सार्ध सानु सादि साल साधु साध्वस सारङ्ग सारस साकल्य सारसन ।

असि । अग्रे—सित असितुत्री असिधेनु सिन्धु सिन्दूर सिंहासन ।

दासी सारसी सरसी । अग्रे—सीर सीधु सीमन्त ।

तपस्वि स्व । अग्रे—स्वर स्वर्ण स्वच्छन्द स्वामि स्वान्त सूत्र सूनृत सूद सूर सूरि सूपकार ।

सुस्थ दुस्थ अस्थि कायस्थ । अग्रे—स्थाल स्थाली स्थली स्थपुट स्थपति स्थापक स्थाम स्थान स्थेम स्थैर्य ।

अगस्त्य अगस्ति अवध्वस्त व्यस्त त्रस्त समस्त वस्तु । अग्रे—स्तोत्र स्तुति स्तव स्तन्य स्तबक आस्तरण स्तन स्तोम स्तोक स्तम्बकरि ।

शस्त्र अस्त्र वस्त्र । अग्रे—अस्त्र स्त्री ।

अजस्र अस्र अस्थि अश्रु । अग्रे—अस्र ।

लास्य वयस्य हास्य आस्य सस्य रहस्य । अग्रे-स्मर स्मरण आस्य ।

वसु विभावसु । अग्रे--सु । सुहृत् सुख सुत्री सुरा सुर सुरत सुरङ्गा सुमनः सुवर्ण सुपर्ण सुन्दरी सुदर्शन ।

कुह गुह लेह सिंह रहः वाह देह ग्राह आरोह सन्नाह करुह विरह कटाह वराह पटह गन्धवह गजारोह समारोह । अग्रे—हर हरि हय हव्य हस्त हल हसित आहव हयमार रहः रहंः अहः अहंयुः हंस अहङ्कार हन्त हन्तृ हेला हेति हेलि हेतु हेम हेरिक होम ।

गुहा विदेहा ईहा स्पृहा । अग्रे—आहार हाला हारि हार हास हास्य हारिद्र ।

अहि म्रोहि वहि ग्राहि दाहि । अग्रे—हिङ्गु हिंसा हिम हित अहित अहि आहित हिमानी हिङ्गुल ।

मही वाही । अग्रे—हीन हीनवादी ।

राहु बाहु बहु । अग्रे—हुत हुड आहुत ।

गुह्य वाह्य । अग्रे—ह्यस्तन ।

मोक्ष यक्ष आरक्ष पक्ष अध्यक्ष दक्ष कक्ष प्रक्ष ध्वाङ्क्ष अक्ष गवाक्ष वैकक्ष विपक्ष कटाक्ष वलक्ष । अग्रे—क्षय क्षमा क्षम क्षेत्र अक्ष अक्षर उक्ष क्षपण ।

राक्षा रक्षा द्राक्षा लाक्षा आकाङ्क्षा । अग्रे—क्षार क्षाम क्षान्त क्षालित ।

पक्षि कुक्षि अक्षि माक्षि । अग्रे—क्षिति अक्षि क्षीर क्षीब ।

रक्षः अक्ष । अग्रे—क्षोद क्षोभित ।

भिक्षु मङ्क्षु चक्षुः तरक्षु । अग्रे—क्षुप्र क्षुधा क्षुर प्रक्षुप ।

पक्ष्म पक्ष्मल राजयक्ष्म लक्ष्मी । अग्रे—क्ष्मा ।

एवं व्यञ्जनक्रमोऽन्योऽपि ज्ञेयः ।

अथ स्वरादिशब्दक्रमः—

अनिरुद्ध अनिल अहोरात्र अपवर्ग अमृत अवनी अशोक अतिथि अगुरु अवट अजित अनवरत ।

आकुल आमिष आयति आमय आखेटक आलाप आहार आवाल आकार आलोक ।

इन्धन इन्दु इङ्गुदी इन्द्रावरज ।

ईश ईक्षण ।

उपराग उद्धत उदन्त उपवन उद्गार उद्दार उत्ताल उदर उदधि उत्पल उत्कर उत्कल उत्तम उद्भट उदित उत्कर्ष उपल उत्प्रास ।

ऊन ऊरु ऊह ।

एक एकान्त ।

ऐरावण ऐरावत ।

ऋतु ऋजु ।

अङ्गज अङ्गविक्षेप अम्बर अङ्कुर अङ्कुश अङ्गुलि अम्बक अंशुक अङ्घ्रि अञ्जन अङ्गद अनन्तर अङ्कपाली अन्तर ॥

इति श्रीजिनदत्त० श्लेषसिद्धिप्रताने तृतीये श्लेषव्युत्पादनं नाम प्रथमः स्तबकः ॥

## अथ सर्ववर्णनम् ।

जनितश्लेषसंश्लेषैर्वर्ण्यवर्णादिनामभिः ।

उपमानकृतोल्लासैः साधयेत् सर्ववर्णनम् ॥ ४८ ॥

वर्ण्यस्य वर्णाकाराधारक्रियाधेयानि नामानि, तथा वर्ण्यादिगुणैर्वर्णसदृशानां पदार्थानां नामानि श्लेषार्पितोपमानयुक्तानि कृत्वा सर्ववर्णनं कुर्वीत । यत्रैकेन श्वेतादिशब्देन श्वेतादिपदार्थाः सर्वेऽपि वर्ण्यन्ते तत्सर्ववर्णनम् । यथा—

अहो गौरवसल्लक्ष्मीर्यामिनीकामिनीपतिः ।

सुपर्वपर्वतौपम्यभङ्गीमङ्गीकरोत्यसौ ॥

अहो गौरवेत्येकपदेनैव ये केऽपि श्वेतपदार्था भवन्ति, ते सर्वेऽप्येवं वर्ण्यन्ते ।

वर्णादीनां सङ्ग्रहो यथा—

सत्कोणवृत्तलघुलम्बपुराणनव्य-
वक्रान्तदूरचलनिश्चलदुःसुगन्धाः ।
सूक्ष्मोरुतीव्रपृथुसङ्कटनिस्ससार-
स्थानप्रभासरसनीरसवामनाः स्यु ॥ ४९ ॥

प्रभा श्वेतपीतादिको वर्णः । सत्कोणवृत्तलघुलम्बादिराकारः । स्थानशब्देन स्वर्गाऽऽकाशभूपातालपर्वतनदीवनप्रभृतिक आधारः । चलनिश्चलादिकाः क्रियाः । पुराण नव्य-अन्तर-दूर-दुर्गन्ध-सुगन्ध-निःसार-ससार-सरस-नीरसादिभिराधेयादयः । अमीषां च वर्णादीनां नामानि पूर्वोक्तश्लेषरीत्या सश्लेषाणि क्रियन्ते । पूर्वं श्वेतवर्ण-शब्दा यथा—

गौरी भूतकलाशाली परमश्वेतताद्दतिः ।
सपीवरसितोल्लासाः परशुभ्रासितादयः ॥

आदिशब्दादन्येऽपि यथा—अधिकगौरचितस्थितिः, सुराष्ट्रवत् । प्रियंगौरचिताटोपं बिभ्रत्, भृङ्गवत । पुरो गौरसाटोपश्रीः तरुणीवत् । विश्वेतत्वमनोहरो, योगिवत् । स्पष्टां श्वेतश्रियं बिभ्रत्, भानुवत् । लोलुपश्वेतवैभवः, पशुपालवत् ॥

एवं वर्णादिनामश्लेषशब्दाः, सदृग्गुणपदार्थश्लेषशब्दाश्च बहवो मत्कृत—काव्य-कल्पलतापरिमले श्लेषशब्दसमुच्चयात् ज्ञेयाः । सदृग्गुणशब्दा यथा—

अहो चन्द्रकसल्लक्ष्मीर्घनसारश्रियं वहन् ।
सदा नवसुधाशोभी बिभ्राणो राजतश्रियम् ॥

एवं सर्वत्र गुणशब्दाः सदृग्गुणशब्दाश्च श्लेषाः । इति श्वेतवर्णः ।

अधिकारुण्यसंशोभी स्फुरन्माञ्जिष्ठवैभवः ।
सदा विराजताम्रश्रीर्बहुलोहितवैभवः ॥
विद्रुमप्रवरच्छायः प्रवालस्थितिपेशलः ।
अशोकश्रीमनोहारी बन्धुर्जीवनवर्धिभाः ॥

इति रक्तवर्णः ।

अधिकप्रश्रियं बिभ्रत्कलारचितवैभवः ।
रङ्गत्पिङ्गलतासङ्गी मधुपीतश्रियं वहन् ॥
जातरूपश्रियं बिभ्रत्परागश्रीविराजितः ।
कर्णिकारचितच्छायस्तरणिस्थितिभासुरः ॥

इति पीतवर्णः ।

असितत्वमनोहारी बहुश्यामलतान्वितः ।
स्वभावनीलसल्लक्ष्मीः सदा रामोदितद्युतिः ॥
केशवामोदितच्छायो नदीनश्रीमनोहरः ।
अन्धकारातिरोचिष्णुर्बिभ्रत्कुवलयस्थितिम् ॥

इति श्यामवर्णः ।

नवधूसरसाटोपः सदा शबलसद्द्युतिः ।
विभात्यधिकपोतश्रीरासभासितवैभवः ॥

इति धूसरवर्णः ।

अथाऽऽधारशब्दाः—

स्वर्जनस्थितिरोचिष्णुः स्वर्गलाभकरस्थितिः ।
सदा दिवि हितोल्लासः सुरावासनयाऽन्वितः ॥

इति स्वर्गाधारः ।

सव्योमसङ्गविद्योती सन्नभोगगनस्थितिः ।
अश्रान्तस्थितिरोचिष्णुः सदाकाशकृतस्थितिः ॥

इति व्योमाधारः ।

स्वयं भूस्थितिविभ्राजिसम्पन्नवसुधास्थितिः ।
स्फुरद्धरित्रिकास्थानः स्फुरद्धारकसंस्थितिः ॥

इति भूम्याधारः ।

वडवामुखरोचिष्णुः सदा पातालवैभवः ।
स्फुरद्भूद्विरसनावासः सदा बलिगृहस्थितिः ॥

इति पातालाधारः ।

गिरिस्थितिमनोहारी कुशैलाभोगभासुरः ।
प्रतिभूधरसंरम्भः पर्वतस्थितिमुद्वहन् ॥

इति शैलाधारः ।

सश्रीकाननरोचिष्णुः कान्तारचितवैभवः ।
अधिकासारसारश्रीर्विधुनीतश्रियं वहन् ॥

इति वनसरोनद्याधारः ।

स्वर्णस्थितिमनोहारी सदा नीरोचितस्थितिः ।
सज्जलक्षणविद्योती सदम्भस्थितिपेशलः ॥

इति जलाधारः ।

सम्पन्नवेश्मनि स्थायी सदनस्थितिभासितः ।
सद्मनः स्थितिमुद्बिभ्रत् शुशोभिनिलये स्थितः ॥

इति गृहाधारः ।

अथाऽऽकारशब्दाः—

सद्वृत्ताभोगसंशोभी सर्वदारालसस्थितिः ।
वृउरस्थितिविद्योती ह्यधिकं प्रांशुवैभवः ॥
ऊर्मिमद्वैभवोल्लासी वक्राङ्कस्थितिशोभितः ।
सदैव तनुताभोगो नितान्तमणिमद्द्युतिः ॥
सदा तीव्रव्रतारोपो निशितारोचितस्थितिः ।
पृथुस्थितिमनोहारी स्फुरद्विपुलकस्थितिः ॥

अहो वामनताटोपः सदाऽखर्वतमस्थितिः ।
समहासङ्कटोल्लासः सम्बाधस्थितिमुद्वहन् ॥

तरस्त्वरोचितौ भावबद्धतारोचितौ तमः ।
वरार्थस्याकारशब्दानामेते योज्याः पुरो बुधैः ॥ ५० ॥

यथा—स्थूलतरस्थितिः । महत्वरोचितस्थितिः । सुदीर्घभावबहुश्रीः । सूक्ष्मतारोचितस्थितिः । गुरुतमस्थितिः ।

अथ क्रियाशब्दाः—

सदा चटुलसल्लक्ष्मीरुच्चैस्तरलताऽन्वितः ।
अचलस्थितिविद्योती सदा स्थिरचितद्युतिः ॥
प्रकाशयन् सदाध्वानमुच्चैः कलकलाऽन्वितः ।
साक्षाद्विपाटनाटोपः सत्वरोचितवैभवः ॥
असौ पवित्रसल्लक्ष्मीः सज्जपावनवैभवः ।
अलं म्लानपदं बिभ्रन्नितान्तमलिनस्थितिः ॥
उपकण्ठे स्थितिं बिभ्रत सनीडस्थितिपेशलः ।
सन्निधानस्थितिश्रेष्ठो विप्रकृष्टश्रियं वहन् ॥

अथाऽऽधेयादिशब्दाः—

कीलाभोगगुणासङ्गचूर्णचन्द्रकसन्धयः ।
सदा लिपीनां लक्ष्मीलेखारेखाक्षरवर्णकाः ॥
पीवरज्वालयोद्द्योती मृदुदारेष्टकासितौ ।
दारुणस्थितिसत्काष्ठाभोगौ घर्मसदाजिनौ ॥
कृत्तिकाकार्तिकेयश्रीः सुखटीकासितस्थितिः ।
समोपाधिकपरमसुहृद्भ्यः स्यादयः स्थितिः ॥
परमन्तरसाटोपं वहन् स्पष्टान्तरस्थितिम् ।
सदाविलांशुकोच्चेलो वेशावासश्रियोऽम्बरम् ॥
पोतः सदाधिकपटः सदासिचयभासुरः ।
विस्पष्टाञ्जनसल्लक्ष्मीः शोभितार्णस्थितिं वहन् ॥
तान्तवस्थितिमुद्बिभ्रन्माधुर्यगुणसंयुतः ।
लसल्लवणिमप्रौढः स्फुरत्तीव्ररुचिस्थितिः ॥

मौलिश्रोत्रोलिकभ्रूहनुरदकरहक्तालुनासौष्ठवक्त्र—
स्कन्धग्रीवाभुजोरःस्तनकुचनखवाङ्मध्यनाभ्यंसदेशाः ।
कक्षारोमाङ्घ्रिजङ्घावलिकटिजघनाङ्गुष्ठगुल्फाङ्गुलीस्फिग्—
गुह्यक्रोडप्रकोष्ठावटुकफणितलभ्रान्तिकान्तिप्रकाण्डाः ॥

पुरुषादिवर्णनायाऽङ्गोपाङ्गनामश्लेषो यथा—उच्चैरङ्गमनोहरो, नाट्यवत् । साक्षादधिकविग्रहो, दैत्यवत् । सुशोभिततनुश्रियं वहन्, नृपवत् । समुल्लसितनूपुरश्रीः, स्त्री-

क्रमवत् । अधिकायस्थितिं बिभ्रत्, शचीवत् । कुबेरस्थितिसंयुतः, कैलासवत् । सुसम्पन्नवपूरम्यः, नृपवत् । कलेवरश्रियं बिभ्रत्, कुमारीवत् । उत्तमाङ्गस्थितिं बिभ्रत्, जैनमुनिवत् । अधिकेशश्रियं वहन्, मन्त्रिवत् । बहुकुन्तलसद्द्युतिः, सुभटवत् । सदावालमनोरमः, वृक्षवत् । वेणीसम्भ्रमसम्भृतो, नदीवत् । सदा तुण्डलक्षणान्वितः; दातृवत् । पृथुलास्यमनोहरः, नर्तकीवत् । मुखरोचितवैभवः, कथकवत् । बहुधावदनस्थितिः, सैन्यवत् । अधिकाननरोचिष्णुः, गिरिवत् । स्फुरत्पृथुललाटश्रीः, भृगुकच्छवत् । अलिकान्तिस्थितिं वहन्, पद्मवत् । प्रतिभालासितस्थितिः, कविवत् । उच्चैःश्रवःस्थितिं बिभ्रत्, इन्द्रवत् । अधिकर्णस्थितिं बिभ्रत्, दरिद्रवत् । वहन् वैश्रवणस्थितिम्, कैलासवत् । विश्वेक्षणस्थितिं बिभ्रत्, हरिवत् । नेत्राभोगभासुरो, धनिवत् । नयनोदितवैभवः, मुनिवत् । स्पष्टां बकस्थितिं वहन्, सरोवरवत् । सदा लोचनभासुरः, मन्त्रिवत् । उल्लोचनमितद्युतिः, गृहवत् । सुदर्शनमनोरमो, विष्णुवत् । सुतारास्थितिपेशलः, चन्द्रवत् । कलयन् नासिकास्थितिम्, पान्थवत् । नकस्थितिमनोरमः, समुद्रवत् । सदाधरमनोरमः, पृथ्वीवत् । गण्डस्थितिमनोहरी, वनवत् । हनुमद्वैभवाऽन्विः, रामवत् । कूर्चकस्थितिपेशलः, चित्रवत् । उच्चैरदनभासुरो, बालवत् । असौ सुदर्शनस्थितिं बिभ्रत्, सुभोजिवत् । राजदन्तस्थितिं बिभ्रत्, राजदारवत् । रसनाभोगभासुरः, नारीनितम्बवत् । घण्टिकास्थितिपेशलः, गजवत् । अधिकन्धरयान्वितो, नृपवत् । सुग्रीवोदितवैभवः, रामवत् । स्कन्धस्थितिमनोहारी, ऋणिवत् । गलच्छायामनोहारी, कृष्णपक्षचन्द्रवत् । अधिकण्ठमनोरमः, मन्त्रवत् । विभुजातिमनोहरः, नृपवत् । स्फुरद्बाहोरुचिं बिभ्रत्, सैन्यनिवेशवत् । समदोर्जितवैभवः, कुम्भिवत् । कक्षास्थितिमनोहरो, वादिवत् । सश्रीकफणिवैभवः, पातालवत् । नितान्तमणिबन्धवान्, रथवत् । करस्थितिमनोहरः, नृपवत् । सश्रीकरचितस्थितिः, धनिवत् । करभासितवैभवः, उष्ट्रपालवत् । स्पष्टाऽङ्गुलिस्थितिं वहन्, गान्धिकवत् । कामाऽङ्कुशस्थितिं वहन्, हस्तिवत् । सदाधिकरजस्थितिः, सैन्यवत् । नखरस्थितिभासुरः, वर्षाकवत् । सुसम्पन्नखचितस्थितिः, प्रासादवत् । प्रहस्तस्थितिपेशलः, रावणवत् । नालिकास्थितिसुन्दरः, वनवत् । अवक्रोडलक्षणान्वितः, सत्पुरुषवत् । स्पष्टसुस्तनङ्गपेशलः, सकान्तस्त्रीवत् । उच्चैरङ्कसमन्वितो, दुष्कालवत् । प्रौढोरसश्रियं बिभ्रत्, वटवत् । समस्तनोदिताभोगो, मुनिवत् । कुचेष्टाभोगभासुरः, अधमवत् । द्विपयोधरसाटोपः, नृपवत् । सदापि चण्डसंरम्भो, नृपवत् । प्रौढोदरस्थितिं वहन्, शैलवत् । नाभिभूतस्थितिं वहन्, नृपवत् । वहन् वैकटिकाभोगम्, पुरवत् । सर्वदारोहपेशलः, सुभगवत् । अहोसज्जघनस्थितिः, नभोवत् । सज्जानुगतवैभवः, धनिवत् । सदापि चण्डिकाभोगः, शम्भुवत् । अपूर्वचरणस्थानः, सुभटवत् । द्विपादरचितस्थितिः, नृपवत् । सदावलनश्रियं बिभ्रत् भूमिवत् ॥

विषाणपुच्छसास्नाभिः शूलाच्छादनचञ्चुभिः ।
वेगभीक्रोधयुद्धश्रीभीमतादिभिरुच्यते ॥ ५१ ॥

तिर्यग्वर्णनाय तदङ्गोपाङ्गश्लेषशब्दा यथा—शृङ्गारोपचितस्थितिः, स्त्रीवत् ।

सद्विषाणां श्रियं वहन्, सर्पवत् । विषेत्रपुच्छविभ्राजी, रसितलोहवत् । उच्चं चूतश्रियं वहन्, वनवत् । त्रोटितस्थितिमुद्वहन्, मुनिवत् । सदापिच्छविराजितः, रविवत् । विपक्षोचितवैभवः, नृपवत् । स्फुरद्द्विपक्षतिस्थितिः, रणवत् । इत्यादिशब्दा मत्कृत-काव्यकल्पलतापरिमले शेषसमुच्चयात् ज्ञातव्याः ॥

इति श्रीजनदत्त० श्लेषसिद्धिप्रताने तृतीये सर्ववर्णनस्तबको द्वितीयः ।

## अथोद्दिष्टवर्णनम् ।

वर्णादिभिर्विभिन्नस्योद्दिष्टवस्तुद्वयस्य यत् ।
अभेदः क्रियते श्लेषात्तत्स्यादुद्दिष्टवर्णनम् ॥ ५२ ॥

विभिन्नवर्णद्वयानां षड् भेदाः । यथा—श्वेतश्यामौ, श्वेतरक्तौ, श्वेतपीतौ, रक्तश्यामौ, पीतश्यामौ, पीतरक्तौ ।

एषां क्रमेण शब्दा यथा—

श्वेतश्यामौ विधुहरिताराघनसारशम्भुनागेन्द्राः ।
अभ्राऽश्मगर्भरामानन्तार्जुनचन्द्रहाससिंहीजाः ॥ ५३ ॥
हरेर्जिष्णोर्घनाब्धिभ्यो गजाः सिन्धुर्मुरारितः ।
अद्भ्यो वाहोऽम्बुजात् कृष्णाद् यमुना कुम्भतो द्विषः ॥ ५४ ॥
कृष्णार्थाग्रगतटिनीवाचकशब्दाग्रतो वरो योज्यः ।
नीरदघनोपलसितसदाहिमकरसिन्धुवेणिपृथुलाजाः ॥ ५५ ॥
शङ्करतारकेशसदाकाशव्योमकेशतालाङ्काः ।
नीलांशुकाधिकेशाऽरिष्टसदासिचयकलकण्ठाः ॥ ५६ ॥

श्वेतश्यामावित्यादि । विधुवैभवभासुरः । विधुश्चन्द्रो, विष्णुश्च । हरिहारितर-द्युतिः । हरिशब्देन चन्द्रविष्णू । तारास्फारतरद्युतिः । ताराशब्देन तारका, नयन-कनीनिका च । घनसाररुचिस्फारः । कृष्णपक्षे घना मेघास्तद्वत्साररुचिः । श्वेतपक्षे घन-सारशब्दः कर्पूरवाची । शम्भुशोभामनोहरः । शम्भुशब्देन हरिहरौ । नागेन्द्ररुचिर-च्छायः । नागेन्द्रशब्देन शेषो हस्तीन्द्रश्च । अभ्रप्रभामनोहारो । अभ्रशब्देन मेघो-ऽभ्रकश्च । अश्मगर्भसगर्भांशुः । अश्मगर्भशब्देन मरकतं, पाषाणगर्भश्च । सदा रामा-ऽभिरामश्रीः । रामशब्देन दाशरथिर्बलदेवश्च । अनन्तरुचिरोचिष्णुः । अनन्तशब्देन विष्णुर्बलदेवश्च । अर्जुनच्छविपेशलः । अर्जुनशब्देन पार्थो धवलवर्णश्च । चन्द्रहास-प्रकाशश्रीः । चन्द्रहासशब्देन खड्गः, चन्द्रस्य हासः प्रकाशश्च । सिंहीजरुचिरो-चितः । सिंहीजशब्देन राहुः सिंहश्च ।

हरेर्जिष्णोरित्यादि । हरिशब्दात् जिष्णुशब्दात् घनवाचकशब्देभ्योऽब्धिवाचक-शब्देभ्यश्च गजवाचकाः शब्दाः प्रयुज्यन्ते । यथा—

हरिकुम्भिनिभज्योतिर्जिष्णुहस्तिनिभप्रभः ।
मेघदन्तावलच्छायः समुद्रद्विरदद्युतिः ॥

कृष्णवर्णपक्षे हरिजिष्णुशब्दौ विष्णुवाचकौ । हरिश्च कुम्भी च जिष्णुश्च हस्ती च तद्वत् द्युतिः । श्वेतवर्णपक्षे हरिजिष्णुशब्दाविन्द्रवाचकौ । ततो हरेः कुम्भी जिष्णोर्हस्ती ऐरावणस्तद्वद् द्युतिः । तथा कृष्णवर्णपक्षे मेघाश्च दन्तावलाश्च, समुद्राश्च द्विरदाश्च तद्वत् द्युतिः । श्वेतपक्षे मेघहस्ती, समुद्रहस्ती, ऐरावणः तद्वत द्युतिः ।

तथा मुरारिवाचकशब्देभ्यः सिन्धुशब्दः प्रयुज्यते । विष्णुसिन्धुसमप्रभः । कृष्णपक्षे मुरारिश्च सिन्धुश्च तद्वत् द्युतिः । श्वेतपक्षे मुरारेः सिन्धुर्नदी गङ्गा तद्वत् द्युतिः ।

तथा जलवाचकशब्देभ्यो वाहशब्दः प्रयुज्यते । जलवाहसमप्रभः । कृष्णपक्षे जलवाहो मेघस्तद्वत् द्युतिः । श्वेतपक्षे जलस्य वाहस्तद्वद् द्युतिः ।

कृष्णशब्दादम्बुजवाचिनः शब्दाः प्रयुज्यन्ते । कृष्णाऽम्भोजसमप्रभः । कृष्णपक्षे कृष्णाम्भोजं नीलोत्पलम् । श्वेतपक्षे कृष्णस्य हरेरम्भोजं नाभिपुण्डरीकं तद्वत् द्युतिः ।

यमुनावाचकशब्देभ्यस्तथा कुम्भिवाचकशब्देभ्यो द्वेषिवाचिनः शब्दाः प्रयुज्यन्ते । यमुनारिसमप्रभः । कुम्भिद्वेषिरुचिः सदा । कृष्णपक्षे यमुनाया अरिरूपा स्पर्द्धिनी रुचिर्यस्य, कुम्भिनां द्वेषिणी रुचिर्यस्य । श्वेतपक्षे यमुनारिर्बलदेवः कुम्भिद्वेषी सिंहस्तद्वत् द्युतिः ।

कृष्णार्थेत्यादि । कृष्णवाचकशब्दात् पुरःस्थितनदीवाचकशब्देभ्यो वरशब्दः प्रयोज्यः । कृष्णकुल्या वरद्युतिः । श्वेतपक्षे कृष्णकुल्या गङ्गा तद्वत् द्युतिः । श्यामपक्षे कृष्णो विष्णुः कुल्यावरः समुद्रः तद्वत् द्युतिः । नीरदद्युतिभासुरः । नीरदो मेघस्तद्वत् । पक्षे निश्चिता रदवत् दन्तवत् द्युतिः । घनोपलसितश्रीः । घनवत् मेघवत् उपलसिता श्रीः । पक्षे घनोपलः करकस्तद्वत्सिता शुभ्रा श्रीः । सदाहिमकरद्युतिः । हिमकरश्चन्द्रस्तद्वत् । पक्षे अहिः सर्पो मकरश्च । सिन्धुवेणिश्रियं वहन् । सिन्धुर्नदी तस्याः वेणिः प्रवाहस्तद्वत् । पक्षे सिन्धुः समुद्रो वेणिः केशपाशबन्धः तद्वत् । पृथुलाजसमद्युतिः । पृथुलाजवत् कान्तिः । पक्षे पृथुला अजसमा विष्णुसमा ।

शङ्करेत्यादि । युक्तः शङ्करश्रिया । शङ्कस्य कराः किरणानि । पक्षे शङ्करो विष्णुः तारकेशच्छविः । तारकेशश्चन्द्रस्तद्वत । पक्षे तारा दीप्ता केशवत् छविः । सदा काशश्रीः । सद्विद्यमाना आकाशवत् । पक्षे सदा काशवत । व्योमकेशच्छविः । व्योम च केशाश्च तद्वत् । पक्षे व्योमकेशः शिवस्तद्वत् । काललक्ष्मश्रीः । तालश्च लक्ष्म च तद्वत् । पक्षे काललक्ष्मा बलदेवः । नीलांऽशुकश्रीः । नीलानाम् अंशुकानां किरणानां श्रीः । पक्षे नीलांऽशुको बलदेवस्तद्वत् । अधिकेशच्छायः । अधि सामस्त्येन केशवत । पक्षे अधिकम् ईशवत् । अरिष्टरुचिः । अरिष्टशब्देन तक्रकाकौ । यथा—

अरिष्टो लशुने निम्बे फेनेऽल्पे कङ्ककाकयोः ।
अरिष्टं सूत्यगारे तच्चिन्हे तक्रे शुभेऽशुभे ॥

सदासिचयरोचिष्णुः । सिचयं वस्त्रं तद्वत् । पक्षे असिचयः खड्गश्रेणिः । कलकण्ठद्युतिः । कलकण्ठः पिको, हंसश्च । यथा—

कलकण्ठः पिके पारावते हंसे कलध्वनौ ।

श्लोकोत्तीर्णाः शब्दाः । वहन् कलभवच्छायाम् । सदाधिकेशवच्छायः । अन्ध-

कारातिदीधितिः । अनेकपायसच्छायः । वपुर्महोदधिच्छायं वहन् । स्पष्टांशुकश्रियं बिभ्रत् । धौताम्बरश्रियं श्रयन् । स्फटिकान्तश्रियं बिभ्रत् । स्फटिकाचलसल्लक्ष्मीः । स्फटी सर्पः । पुरो गजलसल्लक्ष्मीः । जलमुक्तान्तदीधितिः । जलं च मुक्ताश्च तद्व-दन्ते दीधितिर्यस्य । पक्षे जलमुक् मेघः तद्वत्तान्ता । अवश्यायश्रियं वहन् । सैन्धव-द्युतिविद्योती । कलितो माधवश्रिया । शोभते वराहरोचितच्छाया यन्मूर्त्तिः । वृषा-कपिद्युतिद्योती । वृषाकपिशब्देन कृष्णशिवौ ॥

रक्तश्वेतौ हरिशुचिपुष्करशतपत्रसूर्यकान्ताऽब्जाः ।
नवहंसमहापद्मार्कसोदराः कमलकीलाले ॥ ५७ ॥
सुहृद्रत्नानि भानुभ्यो वन्हिरत्नरदांशुकैः ।
जलेभ्यो जन्मशोभाभिः सरोजकुमुदारिभिः ॥ ५८ ॥
वृषाकपिप्रभाशोभी सूर्योपलसितद्युतिः ।
सोमप्रभातरङ्गश्रीः सुधातुलसितद्युतिः ॥ ५९ ॥

रक्तेत्यादि । हरिवैभवभासुरः । हरिशब्देन रविचन्द्रौ । शुचिशोभाविभूषितः । शुचिशब्देन शुभ्रवर्णौ वह्निश्च । यथा—

शुचिः शुद्धे सितेऽनले ।
ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि ।
शृङ्गारे—इत्यनेकार्थः ।

पुष्करद्युतिरोचितः । पुष्करशब्देन जलकमले । शतपत्रप्रभाशोभी । शतपत्र-शब्देन हंसकमले ।

सूर्यवाचकशब्देभ्यः कान्तशब्दः प्रयुज्यते । भानुकान्ततद्युतिः । रक्तपक्षे भानु-वत्कान्ता रुचिर्यस्य । श्वेतपक्षे भानुकान्तः सूर्यकान्तस्तद्वद्रुचिः । अब्जकान्तिमनो-हारि । अब्जशब्देन चन्द्रकमले । नवहंससमद्युतिः । नवहंसशब्देन बालार्कबाल-हंसौ । महापद्मांशुकद्युतिः । महापद्मं च नागश्च अंशुकं वस्त्रं श्वेतपक्षे । रक्तपक्षे कमल-किरणाः । अर्कसोदरदीधितिः । अर्कशब्देन स्फटिकाऽऽदित्यौ । कमलच्छविभासुरः । कमलशब्देन जलपङ्कजे । कीलालच्छविभासुरः । कीलालशब्देन रुधिरजले ।

सुहृद्रत्नानीत्यादि । भानुवाचकशब्देभ्यः सुहृद्वाचकशब्दाः रक्तवाचकशब्दाश्च प्रयुज्यन्ते । रविमित्रप्रभाशोभी । श्वेतपक्षे रविमित्रं चन्द्रः । रक्तपक्षे रवेर्मित्ररूपा प्रभा । भानुरत्ननिभद्युतिः । श्वेतपक्षे भानुरत्नं सूर्यकान्तः । रक्तपक्षे रविर्मणिश्च ।

वह्निवाचकशब्देभ्यो रत्नवाचकशब्दाः प्रयुज्यन्ते । वह्निरत्नोपमद्युतिः । रक्तपक्षे वह्निश्च रत्नं च तद्वत् ।

रदवाचकशब्देभ्योंऽशुकवाचिनः शब्दाः प्रयुज्यन्ते । रदांशुकद्युतिद्योती । श्वेत-पक्षे रदाश्च अंशुकानि च तद्वत् द्युतिः । रक्तपक्षे रदांशुकोऽधरः तद्वत् ।

जलवाचकशब्देभ्यो जन्मशोभावाचकाः शब्दाः प्रयुज्यन्ते । युक्तो जलजशोभया । श्वेतपक्षे जलजाता शोभा । उक्तपक्षे जलजं कमलं तद्वत् ।

सरोजवाचकशब्देभ्यः कुमुदवाचकशब्देभ्यश्चाऽरिवाचकशब्दाः प्रयुज्यन्ते । सरोजा-

रिसमप्रभः । रक्तपक्षे सरोजानाम् अरिरूपा स्पर्द्धिनी प्रभा यस्य । श्वेतपक्षे सरोजारिश्चन्द्रस्तत्समा । कुमुदारिद्युतिद्योती । श्वेतपक्षे कुमुदानामरिरूपा स्पर्द्धिनी द्युतिर्या तया द्योती । रक्तपक्षे कुमुदारिरादित्यस्तद्वत् द्युतिः ।

वृषेत्यादि । वृषाकपिप्रभाशोभी । वृषाकपिशब्देन शिवानलौ । सूर्योपलसितद्युतिः । सूर्यवदुपलसिता । पक्षे सूर्योपलः सूर्यकान्तस्तद्वत् सिताः शुभ्राः । सोमप्रभातरङ्गश्रीः । सोमः प्रशस्योदयः प्रभातस्य रङ्गस्तद्वत् । पक्षे सोमश्चन्द्रः तस्य प्रभातरङ्गः कान्तिवीची तद्वत । सुधातुलसितद्युतिः । सुधावदतुला सिता शुभ्रा । पक्षे सुष्ठु धातुवल्लसिता ॥

पीतश्वेतौ गौरद्विजराजकपर्दचन्द्रहंसाऽर्काः ।
शम्भुमहारजतार्जुनहरिहैमाऽष्टापदानि कलधौतम् ॥ ६० ॥
हरिगोपत्योस्तार्क्ष्यः कान्तो रविचतश्च बान्धवास्तेभ्यः ।
वाममहाग्रगदेवाद्रियो विश्वेऽपि नाकिनोऽपि स्युः ॥ ६१ ॥
उच्चकैरजतान्तश्रीर्विधौ वर्णोपमां वहन् ।
सुशोभितारकूटश्रीः स्वर्णस्तोमसितद्युतिः ॥ ६२ ॥
मधुद्युतिमनोहारी शङ्खकान्तिमनोरमः ।
दहनोपलसत्कान्तिर्गाङ्गेयच्छविसम्भ्रमः ॥ ६३ ॥

पीतेत्यादि । गौरद्युतिमनोहारी । गौरशब्देन श्वेतपीते । द्विजराजप्रभाशोभी । द्विजराजशब्देन चन्द्रगरुडौ । कपर्दद्युतिविद्योती । कपर्दशब्देन वराटकधूर्जटिजटाजूटौ । चन्द्रद्युतिमनोहरः । चन्द्रशब्देन शशी सुवर्णं च । हंसशोभाप्रशस्यश्रीः । हंसशब्देन रविचक्राङ्गौ । अर्कलक्ष्मीमनोहरः । अर्कशब्देन स्फटिकादित्यौ । शम्भुशोभामनोहारी । शम्भुशब्देन शिवब्रह्माणौ । महारजतदीधितिः । पीतपक्षे महाराजतं सुवर्णं तद्वत् । श्वेतपक्षे महती रजतवत् रूप्यवद्दीधितिर्यस्य । अर्जुनप्रभया शोभी। अर्जुनशब्देन तृणश्वेतौ । हरिप्रभामनोहारी । हरिशब्देन चन्द्रः पिङ्गलवर्णश्च । हैमस्तोमप्रभः सोमः । पीतपक्षे हैमस्तोमः स्वर्णराशिः । सितपक्षे हिमराशिः । अष्टापदप्रभास्पष्टः । अष्टापदशब्देन सुवर्णशरभौ । कलधौतकलद्युतिः । कलधौतशब्देन रूप्यसुवर्णे ।

हरिगोपत्योरित्यादि । हरिगोपतिशब्दाभ्यां पुरतस्तार्क्ष्यशब्दः प्रयुज्यते । यथा— हरितार्क्ष्यप्रभाशोभी । पीतपक्षे हरिर्भानुस्तार्क्ष्यो गरुडस्तद्वत् । श्वेतपक्षे हरेरिन्द्रस्य तार्क्ष्योऽश्व उच्चैश्रवास्तद्वत् । सदागोपतितार्क्ष्यश्रीः । पीतपक्षे गोपतिर्भानुस्तार्क्ष्यो गरुडस्तद्वत् । श्वेतपक्षे गोपतिरिन्द्रस्तस्य तार्क्ष्योऽश्वस्तद्वत् द्युतिः ।

रविवाचकशब्देभ्यः कान्तशब्दः प्रयुज्यते । रविकान्तद्युतिद्योती । पीतपक्षे रविवत्कान्ता द्युतिः । श्वेतपक्षे रविकान्तः सूर्यकान्तस्तद्वत् द्युतिः ।

तेभ्यो रविवाचकशब्देभ्यो बान्धववाचकाः शब्दाः प्रयुज्यन्ते । रविबान्धवदीधितिः । पीतपक्षे रवेर्बान्धवरूपा दीधितिर्यस्य । श्वेतपक्षे रविबान्धवश्चन्द्रस्तद्वत् द्युतिः ।

वामशब्दस्य महाशब्दस्याऽग्रतो यो देवशब्दस्तस्य पुरतो गिरिवाचिनः शब्दाः

प्रयुज्यन्ते । वामदेवगिरिच्छायः । पीतपक्षे वामः प्रधानो देवगिरिमेरुस्तद्वत् । श्वेतपक्षे वामदेवः शिवस्तस्य गिरिस्तद्वत् । महादेवगिरिद्युतिः । महांश्चासौ देवगिरिस्तद्वत् । श्वेतपक्षे महादेवः शिवस्तस्य गिरिः कैलासस्तद्वत् ।

तथा विश्वपिनाकिशब्दाद्गिरिवाचकाः शब्दाः प्रयुज्यन्ते । विश्वेपिनाकिशैलश्रीः । श्वेतपक्षे विश्वे जगति पिनाकिशैलः कैलासस्तद्वत् । पीतपक्षे विश्वेऽपि जगत्यपि नाकिशैलो मेरुस्तद्वत् ।

उच्चकैरित्यादि । रजतवद्रूप्यवदन्ते श्रीः । पक्षे अजो ब्रह्मा तद्वत्तान्ता श्रीः । विधौ चन्द्रे ब्रह्मणि च । तारं रूप्यं तस्य कूटः । पक्षे सुशोभितारकूटवद्दीतिवत श्रीः । स्वर्णं सुवर्णम् । पक्षे सुष्ठु अर्णो जलम् ।

मधु इत्यादि । मधु क्षौद्रं दुग्धञ्च । शङ्खः कम्बुः । पक्षे शङ्खो नागः । दहनवदुपलसन्ती । पक्षे दहनोपलः सूर्यकान्तस्तद्वत् । गाङ्गेयं सुवर्णम् । पक्षे गङ्गाच्छविः ॥

रक्तश्यामौ पुष्करहरिविद्रुमनागरङ्गकमलकुजाः ।
उत्पलधनञ्जयवृषाकपिप्रवालानि पङ्कजच्छाया ॥ ६४ ॥
कृष्णाद्रत्नानि गुञ्जातः प्राग्रं सिन्दूरभूषणैः ।
द्विषस्तमोसिताब्जेभ्यः पद्मिनीभ्यो दलानि च ॥ ६५ ॥
कमलाधिपपद्मेशौ सुरागाहितसूर्यसूः ।
रत्नाकरवरश्रीकः सदाधिकमलद्युतिः ॥ ६६ ॥
सदासिन्दूरमुज्झता कालेयत्वं वहन् रुचा ।
स्फुटकामाऽङ्कुशच्छायां कलयन्नलिनश्रियम् ॥ ६७ ॥
स्फुटशोभनताम्रश्रीर्विदूरमणिदीधितिः ।
वराहस्वामिधामश्रीः सम्पन्नखविभाभरः ॥ ६८ ॥

रक्तेत्यादि । पुष्करद्युतिसुन्दरः । पुष्करशब्देन पद्माकाशौ । हरिशब्देन रविविष्णू । विद्रुमं प्रवालं विशिष्टो द्रुमश्च । नागरङ्गश्रिया युतः । नागरङ्गो नारिङ्गफलं तद्वत् । पक्षे नागः सर्पस्तद्वत् , रङ्गः प्रभा । कमलं सरोरुहम् । पक्षे को यमस्तथा मलञ्च । कुजशब्देन मङ्गलवृक्षौ । उत्पलं नीलाऽम्बुजम् । पक्षे उत्कृष्टपलवत् । धनञ्जयशब्देन पावकाऽर्जुनौ । वृषाकपिशब्देन कृष्णाग्नी ।

वृषाकपिर्वासुदेवे शिवेऽग्नौ च ।

प्रवालशब्देन प्रकृष्टकेशा विद्रुमश्च । पङ्कजं कमलं, पङ्के जाता छाया च ।

कृष्णेत्यादि । कृष्णशब्दाद्रत्नवाचकाः शब्दाः प्रयुज्यन्ते । कृष्णरत्नं वैदूर्यादि । पक्षे कृष्णरत्नं कौस्तुभः ।

गुञ्जावाचकशब्देभ्यः प्राग्रशब्दः प्रयुज्यते । गुञ्जाप्राग्रः । रक्तपक्षे गुञ्जावत्प्राग्रः प्रधानः । कृष्णपक्षे गुञ्जायाः प्राग्रम् अग्रं तद्वत् ।

सिन्दूरवाचकशब्देभ्यः भूषणवाचकाः शब्दाः प्रयुज्यन्ते । सिन्दूरस्य भूषणं तद्वत् । कृष्णपक्षे सिन्दूरभूषणा गजाः ।

तमोवाचकशब्देभ्यस्तथाऽसिताब्जवाचकशब्देभ्यो द्विड्वाचकाः शब्दाः प्रयु-

ज्यन्ते । तमोद्वेषिप्रभा । तमसो द्वेषिरूपा स्पर्द्धिनी प्रभा । पक्षे तमोद्वेषी रविस्तद्वत् । नीलाम्भोजरिपुप्रभः । नीलाम्भोजस्य रिपुरूपा प्रभा यस्य । पक्षे नीलाम्भोजरिपुः सूर्यस्तद्वत् ।

पद्मिनीवाचकशब्देभ्यो दलवाचकाः शब्दाः प्रयुज्यन्ते । पद्मिनीदलम् । पद्मिनीवल्ल्या दलं तद्वत् । पक्षे पद्मिनीदलं पुष्पम् ।

कमलेत्यादि । कमलाधिपपद्मेशशब्दाभ्यां विष्णुरवी । सुराणामगो मेरुस्तद्वद्राहितश्रीः । पक्षे सुरा मदिरा तद्वद्राहितश्रीः । सूर्योत्पन्ना द्युतिः । पक्षे सूर्यसूः शनिस्तद्वत् । रत्नानामाकरस्तद्वत । पक्षे रत्नाकरोऽम्बुधिः । अधि कमलवत् । पक्षे अधिको मलवत् ।

सदेत्यादि । असि खड्गं दूरमत्यर्थम् । पक्षे सिन्दूरम् । कालेयशब्देन कुङ्कुमदैत्यौ । कामाऽङ्कुशा नखाः । पक्षे काममत्यर्थमङ्कुशः तस्य छाया नलिनवत् कमलवत् । पक्षे अलिनो भृङ्गस्य ।

स्फुटेत्यादि । स्फुटशोभनताऽऽम्रवत् । पक्षे स्फुटशोभः नतः आम्रः सहकारः तद्वत् । विदूरमणिः । वदूर्यम् । पक्षे विशेषेण दूरमत्यर्थं मणिः । वराहस्वामी आदिकोलः । पक्षे अहःस्वामी सूर्यः । नखानां विभा । पक्षे सम्पन्ना खवद् व्योमवद्विभा । श्लोकोत्तीर्णाः-कलभानुमितद्युतिः । श्रीवत्साङ्कद्युतिद्योती । कलंकमलवद्वपुर्वहन् । जेतापरमसिन्दूरं कृष्णलान्तं श्रियं वहन् ॥

पीतश्यामौ लोहोत्तमहारशम्भुप्रियङ्गनागजितः ।
अजबभ्रुचन्द्रहासार्जुनवेधोनागरङ्गखद्योताः ॥ ६९ ॥
ध्वान्ताहिभ्यो द्विषः कृष्णाच्चीराण्येभ्योऽम्बरांऽशुके ।
तार्क्ष्योऽर्कतः कचा भीमात्कमलापद्मयोरिनः ॥ ७० ॥
पीतांऽशुकः कृष्णपत्रसुपर्णमधुशात्रवः ।
हरिद्रोचितरुग्विद्युत्कान्तप्रितङ्गुलासितौ ॥ ७१ ॥
सज्जातरूपशोभिश्रीः सदापिकपिनद्धरुक् ।
हरिन्मणिमधुपीतश्रीयुतौ स्वर्णवच्छविः ॥ ७२ ॥

पीतेत्यादि । लोहोत्तमं सुवर्णम् । पक्षे लोहवदुत्तमम् । हरिशब्देन पिङ्गलवर्णः कृष्णवर्णश्च । शम्भुशब्देन विष्णुब्रह्माणौ । प्रियङ्गुशब्देन कङ्गुः, फलिनी लता च । नागः सर्पस्तज्जयिनी प्रभा । पक्षे नागजिद्गरुडः ।

एवं नागवाचकशब्देभ्यो जितवाचकशब्दाः प्रयोज्याः । अजो विष्णुर्ब्रह्मा च । बभ्रुः कृष्णो नकुलश्च । चन्द्रहासः खड्गः सुवर्णप्रकाशश्च । अर्जुनशब्देन फाल्गुनस्तृणं च । वेधा विष्णुर्ब्रह्मा च । सन्नागरङ्गः पूर्ववत् । खद्योतः कीटमणिराकाशप्रकाशश्च ।

ध्वान्तेत्यादि । ध्वान्तवाचकशब्देभ्यः सर्पवाचकशब्देभ्यश्च द्वेषिवाचकशब्दाः प्रयुज्यन्ते । ध्वान्तद्वेषिप्रभा । ध्वान्तस्य द्वेषिणी प्रभा । पक्षे ध्वान्तद्वेषी रविः । सर्पशत्रुः । सर्पाणां शत्रुरूपा । पक्षे सर्परिपुर्गरुडः ।

कृष्णवाचकशब्दाच्चीरवाचकाः शब्दाः प्रयुज्यन्ते । कृष्णचीरं नीलवस्त्रम् । पक्षे विष्णोश्चीरं तद्वत् ।

एभ्यः कृष्णवाचकशब्देभ्योऽम्बरशब्दोंऽशुकशब्दश्च प्रयुज्यते। नारायणाऽम्बरवरः । नारायणश्च अम्बरं च तद्वत् । पक्षे विष्णुवस्त्रम् । वासुदेवांऽशुकः । वासुदेवस्यांऽशुकाः किरणाः । पक्षे विष्णोरंशुकं वस्त्रम् ।

अर्कवाचकशब्देभ्यस्ताक्ष्र्यशब्दः प्रयुज्यते । भानुताक्ष्र्यः । भानोस्ताक्ष्र्या अश्वाः । पक्षे भानुरर्कस्ताक्ष्र्यो गरुडश्च ।

भीमशब्दात्कचवाचकाः शब्दाः प्रयुज्यन्ते । भीमकेशः । भीमः पाण्डवः केशाश्च । पक्षे भीमस्य शिवस्य केशाः ।

कमलाशब्दात्पद्मशब्दाच्च इन-ईश-अधिप-इति स्वरादिस्वामिशब्दाः प्रयुज्यन्ते । यथा—कमलेनः । रविर्विष्णुश्च ।

पीतेत्यादि । पीतं वस्त्रं, विष्णुश्च । कृष्णं पत्रं दलम् । कृष्णस्य पत्रं वाहनं गरुडः । सुष्टु पर्णं गरुडश्च । मधुशत्रुर्विष्णुः । मधुनो माक्षिकस्य शत्रुरूपाः । हरिद्राया उचिता रुक् । हरिद्वर्णेन रोचिता रुक् । विद्युत्कान्तः । पक्षे विद्युत्कान्तो मेघः । प्रियङ्गुवल्लसिता ज्योतिः । पक्षे प्रियमिष्टं गुडवदासितम् ।

सजातेत्यादि । सजातरूपवद्रूपशोभिनी । पक्षे जातरूपं सुवर्णं तद्वत । सदा पिकवत कोकिलवत् पिनद्धा । पक्षे सदापि कपिवन्मर्कटवन्नद्धा । हरिन्मणिर्हरित्रत्नं सूर्यः । पक्षे नीलमणिः । मधुवत्पीतः । पक्षे भ्रमरीतः । स्वर्णवत् काञ्चनवत्कान्तिः । पक्षे सुष्टु अर्णवः समुद्रस्तद्वत् ॥

पीतरक्तौ वसुहरी सुवर्णं हेमकन्दलः ।
गैरिकं पद्मभूकान्तिहंसपादारुणैस्तथा ॥ ७३ ॥
मित्राणि कोकपद्मेभ्यो गरुडेभ्यश्च बान्धवाः ।
कमलानि तथा भूरिजातरूपसुवर्णतः ॥ ७४ ॥
नवीनतपनीयश्रीः सदा धातुश्रियं वहन्
विनतासुतलक्ष्मीवानेवमन्यानपि स्मरेत् ॥ ७५ ॥

पीतेत्यादि । वसुशब्देन रत्नवह्नी । हरिशब्देन रविः पिङ्गलवर्णश्च । सुवर्णशब्देन काञ्चनं सुष्टु वर्णं सुवर्णं कुङ्कुमम् । हेमकन्दलः सुवर्णकन्दलस्तद्वत् । रक्तपक्षे हेमकन्दलो विद्रुमस्तद्वत् । गैरिकशब्देन सुवर्णं धातुश्च । पद्मभूः कमलसम्भवा कान्तिः । पक्षे पद्मभूर्ब्रह्मा तद्वत । हंसपादं हिङ्गुलम् । पक्षे हंसस्य चरणः । अरुणो रक्तवर्णो रविश्च ।

मित्रेत्यादि । कोकवाचकशब्देभ्यः पद्मवाचकशब्देभ्यश्च मित्रवाचकाः शब्दाः प्रयुज्यन्ते । कोकमित्रम् । कोकस्य चक्रवाकस्य मित्ररूपा । पक्षे कोकमित्रं रविः । पद्मबन्धुः । पद्मस्य बन्धुरूपा । पक्षे पद्मबन्धुः सूर्यः ।

गरुडवाचकशब्देभ्यो बान्धववाचकाः शब्दाः प्रयुज्यन्ते । गरुडबान्धवः । गरुडस्य बान्धवरूपः । पक्षे गरुडबान्धवोऽरुणः ।

भूरिशब्दाज्जातरूपशब्दात्सुवर्णशब्दाच्च कमलवाचकाः शब्दाः प्रयुज्यन्ते । भूरि-

पङ्कजं सुवर्णकमलम् । पक्षे भूरि प्रचुरं पङ्कजवत् । जातरूपाऽम्बुजम् । जातरूपं सुवर्णं तस्य कमलं तद्वत् । पक्षे उत्पन्नरूपं यदम्बुजम् । सुवर्णाम्भोजम् । स्वर्णाम्बुजम् । रक्त॰ पक्षे शोभनवर्णं यदम्भोजं तद्वत् ।

नवीनेत्यादि । तपनीयं सुवर्णम् । पक्षे तपनस्य सूर्यस्येयं श्रीः । धातुर्गैरिकं तद्वत् । पक्षे धातुर्ब्रह्मणः । विनतासुतौ गरुडाऽरुणौ ।

एवमनया भङ्ग्याऽन्यानपि शब्दान् स्वबुद्ध्या परिकल्पयेत् ॥

विभिन्नवर्णविभिन्नाकारविभिन्नक्रियादीनामुद्दिष्टवस्तूनामभेदप्रतिपत्त्यर्थं शब्दा यथा—

**परमविशदस्वद्वशायोग्यान्तरद्वयरुच्यहार्यार्थाः ।**
**अपरापिनद्धनवसन्नव्याप्तानूनकिञ्चनसमानाः ॥ ७६ ॥**
**ननुसमशुभसम्पन्ना वपुषामहसाङ्गकेन समाः ॥**
**देहेसदाप्रभृतयो विराजतेदृश्यतेप्रमुखाः ॥ ७७ ॥**

परमप्रभृतिशब्दानामग्रे वर्णाकारक्रियादिशब्दा यथौचित्यं प्रयोज्याः । यथा— परमस्थूलतायुतः । एकपक्षे परमा प्रकृष्टा स्थूलता । द्वितीयपक्षे परमतिशयेन अस्थूलता । विशदश्वेतताशाली । विशदा निर्मला । पक्षे विशन्ती अश्वेतता । स्वचलताशाली । स्वकीया चलता । पक्षे सुष्ठु अचलता । एवं शुभसम्पन्नशब्दं यावत् ज्ञेयम् । अत्र सु-रुचिर-श्रीमधुर-शोभामधुराद्याः शब्दाः ज्ञेयाः । वपुषाद्याः सकारान्ताः तृतीयैकवचना॰न्ता अङ्ककेनाद्या अकारान्तास्तृतीयैकवचनान्ता देहेप्रमुखा अकारान्ताः सप्तम्येक-वचनान्ताः सदासर्वदाद्या राजतेमुख्या आत्मनेपदान्ताः क्रियाश्च ।

स्वकामादिमगुणता स्वगुणत्वादृते तनौ ।
वहन्नाहितगुणतां गुणत्वात्पटुनो भृशम् ॥

सर्वत्र गुणशब्दो वर्णाकारादिवाची । यथा—

स्वकामश्वेततां विशदादिमस्थूलतां वहन् ।

स्वं काममत्यर्थं श्वेतताम् । पक्षे अश्वेतताम् । स्वकामादिमां प्रथमां स्थूल-ताम् । पक्षे अस्थूलतामादिम् ।

एवं स्वकामादिशब्दयोः पुरस्थगुणशब्दा भावार्थताप्रत्ययान्ता द्वितीयैकवचना-न्ताश्च कार्याः । चञ्चलत्वादृते देहे । चञ्चलत्वेनाऽऽवृते । पक्षे ऋते विना चञ्चलत्वात् ।

एवं गुणशब्दानां भावार्थत्वप्रत्ययान्तानां पञ्चम्येकवचनान्तानां पुरतः ऋतेशब्दः प्रयोज्यः, तदग्रे अकारान्तो देहादिशब्दः सप्तम्येकवचनान्तो विशेष्यरूपः कार्यः । वह-न्नाहितकृष्णताम् । आहिता या कृष्णता तां वहन् । ह्रस्वोपधत्वान्नद्वयम् । पक्षे न वहन् ।

एवं ह्रस्वोपधशन्नन्तशब्देभ्यः पुरस्थाहितशब्दानामग्रे भावप्रत्ययान्तगुणशब्दा द्वितीयैकवचनान्ताः प्रयोज्याः । रक्तत्वात्पटुनो भाति । रक्तत्वस्य विशेषणं पटुन इति । पक्षे पटु इति क्रियाविशेषणं, नो निषेधार्थः ।

एवं त्वप्रत्ययान्तात् पञ्चम्येकवचनान्ताच्च गुणशब्दात् पटुनो बाढं, पटुनो भृशं, पटुनः स्फुटं, पटुनो राजते-इत्यादिशब्दाः प्रयोज्याः ॥

स्पन्दनवाहनवासनदर्शनमोहनसदातननयनाद्याः ।
पृच्छकसम्बोधनतः प्रयोजनीया बुधजनेन ॥ ७८ ॥

एते एवंविधा नान्ता अन्येऽपि । यथा—स्पर्शन-सूदन-रदन-कोपन-आयतन-मदन-छदन-यजन-बन्धन-भवन-घटन-वर्णन-सजन-इत्यादिशब्देभ्यो नकारं विनाऽप्यर्थे मिलति सम्बोधनीकृतेभ्यः पुरतो गुणशब्दाः प्रयोज्याः । यथा—

असौ विभाति वाग्देवीवासनश्वेतताऽन्वितः ।

श्वेतपक्षे नान्तं सम्बोधनम् । द्वितीयपक्षे नकारवर्जितं सम्बोधनम् । एते श्वेत-श्यामादिशब्दा नियतविरुद्धैर्वर्णवाचका उक्ताः ।

अथैकपक्षे नियतवर्णादिवाचकाः द्वितीयपक्षे सर्ववस्तुवाचकाः कथ्यन्ते । यथा श्वेतवर्णानां वाचकाः शब्दाः—

सोमतारभवाऽनन्तसुधामोदितशङ्कराः ।
भास्वत्कान्तसोमकान्तघनसारसदाधिकाः ॥

सोमच्छविमनोहारी । श्वेतपक्षे सोमश्चन्द्रस्तद्वत् । द्वितीयपक्षे सोमा सौम्यरूपा छविः । इदं विशेषणं सर्ववस्तुव्यापि । भवच्छविपक्षे भवती या छविः । एवं सर्वशब्देषु ज्ञेयम् ।

अथ कृष्णवर्णशब्दाः—

विश्वरूपाच्युतानन्तश्रीधरा कलभासितः ।
बहुलासिपरपुष्टः सर्वदा तिलसद्द्युतिः ॥

अथ रक्तवर्णशब्दाः—

नवभास्वत्सुखोद्योतनालीकाशोकमङ्गलाः ।
विभाप्रभातरङ्गौ च सज्जपावनपावकौ ॥

अथ पीतवर्णशब्दाः—

जातरूपसदापीनकल्याणमधुरोचिताः ।
बहुशोभाऽनुवृत्तिश्रीर्भास्वत्प्रद्योतनावपि ॥

अथाऽऽधारशब्दाः—

अहो सुरचितच्छायः स्वकामरचितस्थितिः ।
स्पष्टाऽम्बरश्रियं बिभ्रत्तारापथकृतस्थितिः ॥
स्फुरद्वनिबद्धश्रीः सदा भूतलसद्द्युतिः ।
सदा हि विश्ववल्गुश्रीर्विलसद्वैभवाऽन्वितः ॥
सदा सज्जलसल्लक्ष्मीः परमोदकवैभवः ।
कान्तारचितसंस्थानः सदा रामश्रियं वहन् ॥

अथाऽऽकारशब्दाः—

वृत्तलक्ष्मीमनोहारी निस्तुलश्रीमनोरमः ।
अहो गौरवसल्लक्ष्मीरखंवरचितस्थतिः ॥

विश्वविस्तीर्णलक्ष्मीकः सकलाभोगभास्वरः ।
समञ्जुलवसल्लक्ष्मीरूर्मिमद्वैभवान्वितः ॥

अथ क्रियादिशब्दाः—

उच्चैस्तरलसल्लक्ष्मीः सुपीवरवसद्द्युतिः ।
सम्पन्नव्यासलक्ष्मीकः परकोटिश्रिया युतः ॥

धामभावौ प्रभावश्च विभावश्च यथोचितम् ।
वर्णस्याकारशब्देभ्यः सम्प्रयोज्या मनीषिभिः ॥ ७९ ॥

यथा—

स्थूलधाममनोहारी गुरुभावचितस्थितिः ।
स्थूलप्रभाववद्धश्रीरुच्चैर्विभवरोचितः ॥

धामशब्देन देहस्तेजश्च ।

इति श्रीजिनदत्तसूरि० श्लेषसिद्धिप्रताने तृतीये उद्दिष्टवर्णनस्तबकस्तृतीयः ॥

## अथाऽद्भुतविधिः ।

यत्र लिङ्गविभक्तीनां सति भेदे महत्यपि ।
दृश्यते शब्दसादृश्यमिदमद्भुतमुच्यते ॥ ८० ॥
णिनन्तैः स्त्रीकृतैः शब्दैरोसि क्लीबस्त्रियोः पुनः ।
तैरेव रेफपृष्ठस्थैः स्त्रीकर्मबहुता भवेत् ॥ ८१ ॥

णिन्प्रत्ययान्ताः शब्दा राजिन् भ्राजिन् शाकिन्–इत्याद्याः 'स्त्रीलिङ्गे नद्यन्ताः' इति सूत्रेण ईप्रत्ययान्ता क्रियन्ते, तेषामग्रे रेफादिशब्दा रागरवप्रमुखाः प्रयोज्याः । एवं नपुंसकलिङ्गे अप्रत्ययान्याः स्त्रीलिङ्गे सिप्रत्ययान्ता णिनन्ताः शब्दा भवन्ति । यथा—

प्रभावराजनीरागोल्लासप्रध्वंसिनी स्यात् ।
गीर्जिनस्य पदाब्जे च कुरुतां सुखसम्पदः ॥

वाणीविशेषणे सिः स्त्रियां, पदाब्जविशेषणे पुन्नपुंसके, सुखसम्पद्विशेषणे कर्मणि स्त्रियां शस् ॥

विशेषणपरिक्षिप्तैरग्न्यन्तैः रेफपृष्ठगैः ।
द्विस्थद्विपञ्चमीकर्मस्त्रीबहुत्वेऽद्भुताऽद्भुतम् ॥ ८२ ॥

अग्न्यतैः ऋकारान्तैरुकारान्तैः स्थितिपटुतुल्यैर्विशेषणवेष्टितैः क्षिप्तै रेफपृष्टस्थै रेफादिरागरसरवरयमुखशब्दैः अद्भुताद्भुतं काव्यं भवति । परं विशेषं द्विस्थोभयपदधातोरग्रे द्विपञ्चमीपञ्चम्याः परस्मैपदद्विवचनान्ताः आत्मनेपदैकवचनान्ताः कुरुतां तनुतामित्यादि । एवंविधक्रियायां कर्मणि स्त्रीलिङ्गबहुत्वयुक्तं विशेषणं क्रियते । यथा—

भवभेदपटू रागध्वान्तभानुस्थिती स्यात् ।
प्रभोर्वचश्चयोऽङ्घ्री च कुरुतां वः शिवं श्रियः ॥

वचश्चयस्य विशेषणे पटोः स्थितेश्चाग्रे पुंल्लिङ्गे सिः। अङ्घ्रयोर्विशेषणे पुंल्लिङ्गे सिः। वः श्रियः इति कर्मविशेषणे स्त्रीलिङ्गे शस्।

तमः स्तोमभिदाचारु रविचन्द्राविवाङ्गिनाम्।
स्वतुल्यो जिनवाक्पूरस्तनुतां सुखसम्पदम्॥
स्मेरपुष्कररोचिष्णू राजन्यकृतशेखरः।
कृपाणस्तव हस्तौ च कीर्तिं वितनुतां श्रियः॥

एवमन्येऽप्येतत्प्रतिबद्धाः शब्दा लिख्यन्ते। शुचि स्थिति रुचि मञ्जु साधु वल्गु चारु पटु इत्याद्या अग्न्यन्ताः, रेफादयः—रवि रश्मि रथ रक्षा रक्षः रसा रजः रहः रज्जु रस रत रमणीय रचित रहित रिपु रिक्त रुचि रुजा रुचिर रोचित रेखा रव राजीव राजा रोम राग रामा राजी रीति रूप रथी रेवा रोग राम॥

विषयाः सनान्तस्वरनिस्वरतृप्रत्ययान्तलीलाभिः।
धातुचतुर्थ्यैकवचः पुरस्थनमलैर्द्रुताद्भुतं भवति॥ ८३॥

ये शब्दा उकारान्ताः प्रथमाबहुवचने वान्ता यान्ताः सन्तोऽर्थं मिलन्ति तैः शब्दैरेकत्वबहुत्वयोः साम्यम्। उकारान्ताः शब्दा यथा—तरु कुरु भीरु विभु प्रभु इत्यादिकाः, शुचि रुचि राजि नाभि सुरभि इत्यादि, एते जसि निष्पन्नाः। यथा-शोभितरवो वनप्रदेशा इव गायनः। एवंशब्दाः—सदारङ्कुरवः, अधिकविभवः, लोलपसवः, बहुरुचिरसाधवः, अधिकंदवः। अथ इकारान्ताः शब्दाः--अनेकपशुचयो भूपाला इव देशः। लोभितरुचयः, उच्चक्रोधराजयः, ज्ञातवेदनाभयः, सदासुरभयः, रमतिमयः, अधिभूमयः, परमखनयः, अयोनयः, अधिभूरयः, भोगिरयः, स्वच्छत्रपालयः, तारकालयः, शुभकेशवलयः, तारकेलयः इत्यादि शब्दा ऊह्याः।

सनान्ता इति। ये शब्दाः सान्ता नान्ताश्च त एव सनहीना अकारान्ता अर्थं मिलन्ति तेषामग्रे प्रथमैकवचनेन एकत्वबहुत्वयोः साम्यम्। यथा—महस्प्रभृतिकाः सान्ताः, सद्मन्प्रभृतिकाः नान्ताः शब्दाः। सहीनो महशब्दः। नहीनः सद्मशब्दः। सती मा लक्ष्मीर्यस्य स सल्लक्ष्मीवाचकः शब्दः। परमहारविरिव सत्पुरुषाः। परमधारा देश इव धनुर्धराः। बहुतराः, निबिडतमाः, पुरोगमनाः, बिलसदनाः, बहुधावदनाः, पुरोगच्छदनाः, कृतकदनाः, बहुश्रीमदनाः, बहुस्वस्थानाः, कृतबहुधानाः, परमध्वान्ताः, रम्यानेकपानाः, विशदध्वनदानाः, परमानाः, बहुधनदानाः, असमानाः, शोभितानाः, सम्पन्नयानाः, कलितस्वानाः, अधिकवचाः, कलशमनाः, बहुदमनाः, सम्पन्नमनाः, सदयाः, सदम्भाः, स्मेरदुच्चैरम्भाः, चरदुच्चैरजाः, बहुस्वर्णाः, प्रगुणितवेधाः, इत्यादि शब्दा अन्येऽप्यूह्याः। अथ नान्ताः--बिलसद्मा नागवर्ग इव पुण्यपुरुषाः। अनुल्लङ्घितसीमा जलधिरिव सत्पुरुषाः। परमेतेषां नान्तानामग्रे विसर्गलोपार्थं घोषवन्तः स्वराश्च प्रयोज्याः। एषां सान्तनान्तानामग्रे ये वकारादिकाः शब्दास्त एव वकारं विना स्वरादिकाश्च विशिष्टाः वर्ण वेला वार्ता अशिष्टा अर्ण एला आर्ताप्रभृतयोऽर्थे मिलन्ति ते शब्दाः प्रयोज्याः। पुल्लिङ्गे एकत्वबहुत्वेषु साम्यम्। यथा-परमहाविशिष्टेन राघवा इव सप्तर्षि-

गणाः । अथ वादिकाः शब्दाः—वनमाली विनायक वनगाहि वर्द्धमान वक वारण वार विक्रमोदित वासना वीरण विचकिल विलाभोग वर्य वधस्थान वंश वर्जन वालि वीजन वरुण वदन वाम वालानोदित वञ्चन वन्ध वार्य वाल वाल विरूप विभाभोग वध वन वृषभ वात वरोचित वज्र वन्हि वर बल वासर वरण वाटी वाह वाद्य वक्षः वेधः बन्धनाश वलि वेष इत्यादि ।

सस्वरनिस्वर इति । ये शब्दाः सस्वरा निस्वराश्च भवन्ति तैः प्रथमैकत्वबहुत्वयोः साम्यम् । यथा—द्वार् रज् भास् पङ्केरुह् क्षितिरुह् ईदृश् कीदृश् । काव्यं यथा—

लोकालोकलसद्विचारविदुरो विस्पष्टनिःश्रेयस-
द्वारः सारगुणालयस्त्रिभुवनस्तुत्याऽङ्घ्रिपङ्केरुहः ।
शश्वद्विश्वजनीनधर्मविभवो विस्तीर्णकल्याणभा,
आद्योऽन्येऽपि मुदं जनस्य ददतां श्रीतीर्थराजः सदा ॥

नान्तानां शब्दानामग्रे विशेषणतया प्रथमाबहुत्वैकत्वयोः साम्यम् । यथा—विलसद्गानः कायस्थामान इति । तथा सान्तानामप्यर्थं मिलति । यथा—बद्धाश्रितसरसः सुकविप्रबन्ध इव ग्रीष्मपान्थाः ।

तृप्रत्ययान्ता इति । तृच्तृन्प्रत्ययान्तानां शब्दानामग्रे प्रथमैकत्वबहुत्वयोः साम्यम् । यथा—सुसम्पन्नयोद्धारः सैन्यनिवेशा इव देशाधिपतिः । सम्पन्नवोद्धारः, सर्वदातारः, बहुधातारः, सजपातारः, मृगयातारः इत्यादि ।

धातुचतुर्थ्येकवच इति । धातोरग्रे चतुर्थीह्यस्तनीविभक्तेरेकवचनम् , तदग्रे नकारादयो मकारादयो वा लकारादयो वा शब्दाः प्रयुज्यन्ते, एकत्वबहुत्वयोः क्रिया भवन्ति । यथा—अभवन्नितान्तम् , अराजन् महान् , व्यचरल्लीलया ॥

न्युपसर्गशब्दपृष्ठगराजीतुल्यैर्विशेषणद्विप्लैः ।
अन्ते क्रियाविशेषणसारैः काव्यं महाऽद्भुतं भवति ॥ ८४ ॥

न्युपसर्गाः निहित निमग्न निरुद्ध इत्यादिशब्दास्तेषां पृष्ठस्थितैः राजिराजी, धूलिधूली, पालिपाली इत्यादिशब्दैरन्ते निकामं नितान्तमित्यादिक्रियाविशेषणसारैः स्त्रीलिङ्गे प्रथमैकवचनेन पुल्लिङ्गे प्रथमाद्विवचनेन नपुंसकलिङ्गे प्रथमाबहुवचनेन महाद्भुतं काव्यं भवति । यथा—

छिन्नाघवल्लीनिहताङ्गभल्लीनिबद्धोरुरुचीनिकामम् ।
श्रीशैशलेयस्य जिनेश्वरस्य शिवाय मूर्तिश्चरणौ वचांसि ॥

शब्दा यथा—नाभी पाली भल्ली भ्रुकुटि चत्वरि धूली व्रतति नीवी जाति राजि रुचि सूचि कुटि कोटि त्रोटि वल्ली मञ्जरी वल्लरी भेरी गोणी चुल्ली उपधि झल्लरी प्रतोली कदली कटि श्रेणि आवलि आलि, सर्वेऽपि इकारान्ता ईकारान्ताश्च । एवमन्येऽप्यूह्याः । एषामग्रे प्रयोज्याः शब्दाः, यथा—निहित निबद्ध नितान्त निकुञ्ज निचित निरुद्ध निमग्न निश्चित निशित निवासित नियुत नियोग इत्यादि ।

अदुरितराजीनिदलितकर्मश्रेणीनिरुद्धरागभरम् ।
मूर्तिक्रमौ वचांसि च जिनस्य लोके सुखं गातम् ॥

स्फुरितसुभाषितपालीनिहतप्रत्यूहसंशयं त्राह्यया ।
मूर्तिक्रमौ महांसि प्रभवतमुदितं वरं दातुम् ॥

एकत्वे प्रभवतिक्रियासमभिहारो, द्वित्वबहुत्वयोः पक्षे कर्तृपदसम्बोधनम् ।

रुचिराव सुप्रभाव दाव पाव विभाव हाव मञ्जुलावेत्यादीनां वान्तानामग्रे अनिबद्धाद्यैः शब्दैर्महाद्भुतं काव्यं भवति । यथा—

सुप्रभावानिबद्धोद्यत्पुण्यभावानियोगतः ।
मूर्तिक्रमौ वचांसि श्रीजिनेन्द्रोर्जनतुष्टये ॥

अन्यन्तानामग्रे—ईरण उरसिकोपि उरूपभोगेत्यादिशब्दैर्महाद्भुतं काव्यं भवति । यथा—

वदनं पादौ वाचस्तव जिन ! सुरुचीरणाय दुरितानाम् ।
विमलतनू रसिकोऽपि स्मरति मृदूरूपभोगार्थम् ॥

अन्युपधसान्तैरन्यन्तैश्चार्थद्वयेऽपि घटमानैरग्रस्थरेफादिशब्दैर्महाद्भुतं भवति । यथा—

निहतजटायूवक्षस्कन्धौ विद्याश्च तर्जय स्वमपि ।
अयमायातो रामः प्रभवतमुदितं रणं कर्तुम् ॥

जटायुशब्दः सान्त उकारान्तोऽप्यस्ति । रक्षोविशेषणे नपुंसकलिङ्गे प्रथमाया एकवचनम् । स्कन्धयोर्विशेषणे द्वितीयाद्विवचनं पुल्लिङ्गे । स्त्रीलिङ्गे विद्यानां विशेषणे द्वितीयाबहुवचनम् ।

वञ्चितादिशब्दपृष्ठे आकारान्ताः शब्दाः प्रयोज्या महाद्भुतं भवति ।

मुखाम्भोजं कुचौ क्रीडा सप्रभावञ्चितश्रिया ।
राधाया यमुनातीरे विष्णोः सुखसमृद्धये ॥

मुखाम्भोजं सप्रभावं, कुचौ सप्रभौ, अग्रे अञ्चितश्रिया, क्रीडा सप्रभा । रुचिरावञ्चितश्रियावङ्ग—इत्यादि ॥

ऊसाधितराजितसमपादाग्रगैरवमुखः शब्दैः ।
भवति तृतीयविभक्तिस्पष्टार्थैरद्भुतं काव्यम् ॥ ८५ ॥

ऊसाधितराजितादिपदानामग्रे स्थितैर्वेणीविचकिलवस्त्रादिभिरवमुखैस्तृतीयाविभक्त्यन्तैः स्त्रीलिङ्गे प्रथमाया एकवचनेन पुंलिङ्गे प्रथमाद्विवचनेनाऽद्भुतं भवति । यथा—

हृद्यावलिविलासेन मध्यश्रीरिव योषितः ।
कपोलाविव नागस्य श्रियं गाते भवद्भुजौ ॥

गाङ् ग्यैङ् गतौ । यथा—वनप्रदेशाविव शोभितावेणी, विलासेन स्त्री । वनपक्षे एणीशब्दः । स्त्रीपक्षे वेणीशब्दः । प्रावृण्मासाविव शोभिता विचकिलमालया स्त्री । राजप्रवेशे हट्टश्रेणीव शोभितावस्त्रमालाभिर्भटौ । शोभित राजित मण्डित द्योतित-इत्यादि, एषामग्रे वनमालिविनायकवदनादिशब्दाः पूर्वं लिखिताः योज्याः ।

स्त्रियामीकारान्तशब्दैः प्रथमाबहुत्वसाधितैरर्थे मिलति एकत्वबहुत्वयोः साम्यम् । यथा-पाल्य कल्य मालिन्य राज्य सुशोभनार्य सुशोभनबाल्य अधिकबर्यः सख्यः मत्यः सत्यः विदितवेद्य विशदवलभ्यः वार्यः सदर्यः दास्य सम्पन्नवारुण्य इत्यादि । तथा—

वनमिवोल्लासितश्रीकवयो नृपसभाप्रदेशाः । नपुंसके एकवचनम् । पुंसि बहुवचनम् । वैश्वानरा इव तेजोनुगतरुचिरवयो गात्रम् । अम्बकुलमिव यः शोभिततरः । प्रवलतमाः सेनाः प्रदोषवत् ।

शोभितादिशब्दानामग्रे निपातनिदाघनिकेतननिचितादिशब्दाः स्थाप्याः स्त्रीलिङ्गे एकवचनेन स्त्रीपुंनपुंसकलिङ्गेषु बहुवचनेन साम्यं भवति । शोभितानिखिलविभवेन । मण्डितानिचितदानेन । राजितानिकेतनैरित्यादि । शोभिता राजिता खण्डिता मण्डिता द्योतितादिशब्दानामग्रे प्रयोज्याः शब्दा यथा—निखिल निधन निरय निदान निधान निपात निदाघ नियति निकुञ्ज निलय निःश्रेणि निवसन निचित निशान्त ।

ईकारोपधाऽऽकारोपधनकारान्ताः पीनहीनादिगानमानादयः शब्दा इकारान्ताः क्रियन्ते नपुंसलिङ्गे एकत्वबहुत्वयोः साम्यं भवति । यथा—अधिकपीनि वनानीव कुलम् । विशदहीनि बिलानीव कुलम् । परमहासमीनि वनानीव समुद्रजलम् । तथा परमखगानि वनानीव विप्रकुलम् । स्वच्छगानि बहुवर्णनागानि परमध्यानि सुसम्पन्न दानि परमदानि बहुधानादानि मञ्जुलयानि पीन हीव मीन पाठीन शालीन अध्वनीन ईशान प्रस्थान इत्यादि ।

वाजादानाभारालाहाक्षा एषां चाऽऽकरान्तादिशब्दानामग्रे तृतीयैकवचनेन श्लेषः । सदालक्ष्मयान्वितः । सदारुजयान्वितः पुरोगदयाऽन्वितः । बहुधानयान्वितः । सदा-देशनयाऽन्वितः । सदारम्भया न्वितः । बहुधारयान्वितः । स्फुटमहेलयान्वितः । अथ बाहयाद्यः । बाहाशब्दो भुजवाची आकारान्तः । सत्वरक्षयान्वित इत्यादि ॥

सनकारान्तैः शब्दैः सिसाधितैः पुंस्त्वनिर्युक्तैः ।
अग्रे क्रियाविशेषणकृतावमुखशब्दतोऽद्भुतं भवति ॥ ८६ ॥

महत्प्रमुखसान्तशब्दैः सन्नन्प्रमुखनान्तशब्दैरग्रस्थक्रियाविशेषणस्थवरबलवाहि-ताद्यवमुखपदयुक्तैः पुलिङ्गे त्रिभिर्वचनैरद्भुतं भवति । यथा परमहावरम् । बिलसद्मावा-हितप्रसरम् । अस्यार्थो 'विवया'इतिसूत्रे प्राक् सनान्तप्रस्तावात् सविस्तरः प्रोक्तः ॥

दीर्घादिनान्तशब्दैः स्त्रियां द्वितीयैकवचनकृतरचनैः ।
अर्थे मिलति च सान्तैः षष्ठीबहुवचनतोऽद्भुतं भवति ।। ८७ ।।

दीर्घादिनान्तशब्दैः स्त्रियां द्वितीयैकवचनेन साधितैरग्रतः स्थितिं बिभ्रदित्यादि बिभ्राणैः षष्ठीबहुत्वेन साम्यादद्भुतं भवति । यथा—मृदूनां स्थितिं बिभ्रदित्यादिशब्दाः ।

तथा सकारान्तशब्दैर्व्यञ्जनान्तैरकारान्तैश्च द्वितीयैकत्वषष्ठीबहुत्वयोः साम्यम् । यथा—सरसां स्थितिं वहन्, परमहसां स्थितिं बिभ्राणः ।

तथा श्लेषविशेषणे पुंसि स्त्रियां च व्यञ्जनान्तानां शब्दानामग्रे जस्शसङसिङसां साम्यम् । रेफनिमित्ते ङसोरपि साम्यम् । यथा—गुणभृतो रयात् । जस्शसौ मुक्त्वा क्लीबेऽपि यथा—शुभावाचो रसात् ।

तथा—धृत् भृत् वृद्रूपा ये अकारान्ता व्यञ्जनान्ताश्च शब्दास्तेषां पुरतः सेरपि साम्यम् । यथा—गुणभृतो रयात् । अकारान्तपक्षे सिः, श्लेषविशेषणे स्त्रियाम् ।

आकारान्ताद्धोषवति निमित्ते सिजसूशसां पुंस्याकारान्तात् सिजसूटानां पुंस्यकारान्ताज्जसः साम्यम् । यथा—सोमपा जगति । पुंपक्षे आकारान्तः । अकारान्तोऽपि जस्विषयः ।

अकारान्तविशेषणात् पुंस्त्रियोर्जसः, स्त्रियां शसः तथा घोषवति निमित्ते स्त्रियां सेरपि साम्यम् । यथा—घृतगुणा जगति ।

पुंस्यकारान्तादाकारादौ स्वरे सिङयोः साम्यम् । यथा—वृक्ष आस्ते ।

तथा भृद्रूपशब्देभ्यः पुंस्याकारान्तात् सिङयोः, पुंस्त्रियोर्व्यञ्जनान्ताज्जस्शसूङसिङसां, क्लीबे ङसिङसोराकारादौ स्वरे साम्यम् । यथा—गुणभृत आदरात् ।

अकारान्तविशेषणात्पुरस्थन्युपसर्गशब्देषु निचितनिभृतरूपेषु पुंसि जसः, स्त्रियां सिजसूशसां, क्लीबे जसूशसोः साम्यम् । यथा—बहुगुणानिकामम् ।

अकारान्तविशेषणात् पुंस्यौजसोः, स्त्रियां जसूशसोर्यवलोपस्वरे साम्यम् । यथा बहुगुणा इह कामम् ।

वृद्भृद्रूपशब्देभ्यः स्त्रियां सेर्लिङ्गत्रये टावचनस्य साम्यम् । यथा गुणभृता, तथाभूतेषु । एवंरूपेषु चतुर्थीसप्तम्योरपि । एवमन्येऽपि बहवः प्रकाराः संभवन्ति ते स्वयमूह्याः ॥

अथेत्यादिः श्लेषः । कुरुतामित्यादिष्वेकत्वद्वित्वयोः, अराजन्नमलेष्वेकत्वबहुत्वयोः, र्व्यतिभाते इत्यादिष्वेकत्वद्वित्वबहुत्वानां साम्यम् ॥

अथ स्वराणां मिथः श्लेषोपायमाह, पूर्वमकारस्याऽन्यस्वरैः क्रमेण श्लेषो यथा—

**ओसि आमि जसि भ्यामि स्वरे गौणतया अआ ।**

ये शब्दा अकारान्ता आकारान्ताश्च पृथगर्थास्ते औस्यादिभिः श्लिष्टाः स्युः । यथा—रामयोः रामाणाम् रामाः रामाभ्याम् । रामावगूहनम्, रामाश्लेषः, रामेच्छा, रामेप्सा, रामोद्योतः, रामोढा, रामैजनम्, रामैहिकः, रामौजः, रामौरसः, रामाञ्चनम्, रामेङ्गितम्। उल्लासितरामो लक्ष्मण इव वसन्तः, अत्र समासेन गौणता । शब्दा यथा—(राम लक्ष्मण पद्म कमल वाल शाल आधान कल कच्छ तारक अलक मालिक जालिक जय जय मुक्त कान्त प्रिय सित दक्षिण दोष अञ्जन सून वासन रसन प्रवाल प्रकार प्रमद प्रवीण प्रसभ शिव जीव वत्स धर गोत्र रस दूल क्षम अनन्त धिषण परवश आर्द्र बहुल तार कील सदारम्भ काष्ठ विनत निकष ग्रह करण घट कक्ष उच्छृङ्खल हाल विदेह आर निर्वीर विधव निष्कल श्रवणादयः) ॥

**अइ अग्रस्थरेफेण इनाग्रगसमासतः ॥ ८८ ॥**

अकारेकारौ सप्तम्येकवचनपुरःस्थरेफादिशब्देन, तथा इनपुरःस्थसमासेन तथा च्विप्रत्ययेन श्लिष्टौ भवतः । यथा सुबुद्धेरचितस्थितिः । आकारान्तपक्षे सप्तमी, इकारान्तपक्षे पञ्चमी षष्ठी वा । शुद्धबुद्धिशोभितः । अकारान्तपक्षे शुद्धश्चासौ बुद्धश्च शुद्धबुद्धोऽस्यास्ति इति इन् । इन्ननेकस्वरादयः । "सर्वादेर्नित्यमिन् द्वन्द्वनिन्दितरोगेभ्यः" इत्यादिना इन्प्राप्तिर्ज्ञेया । यथा शुद्धबुद्धीभूतश्रीः । शब्दा यथा—(शुद्ध सिद्ध प्रयत चित्र मत वल्ल मल्ल रत सुगत जात कान्त नत प्रस्तुत शान्त उन्नत आयत दुर्गत ज्ञात नवनीत अवध कृत ज्ञान अवन अटन निनद प्रकृत अभिजात हर अर अशन

भृत चल बल ग्रन्थ प्रबोध अनेक पक्षतः आट सदा पद्धत काश सूर दुर्विध दीस रिष्ट गुरुतर वार कर कट शाल सुष्ट श्रुत वर्द्धक) इत्यादयः ॥

अई च्विप्रत्ययाद्गौणौ

अकारेकारौ च्विप्रत्ययेन गौणौ श्लिष्टौ भवतः । यथा—महीकृतश्रीः । गौरीभूत-स्थितिः । अकारान्तपक्षे पञ्चमी षष्ठी वा च्विः । शब्दा यथा-(मह गौरव रसा रवि पञ्च वल्लक सल्लक पांशुल वल्ल मल्ल दर गुरुनम वहुनम तन्त्र नन्द वेद वाप सरस अवन बहुतर काल ताल हरिताल कवल ओष्ठ बिम्ब मागध माधव कर्कट करीर अर्जुन कुट कुम्भ वर्द्धन भारतर चार सन्नगर नील बाण चण्डाभ सदानिभ ऐरावत श्रृङ्ग निष्कुट शम कुश कर्कर मन्थन सदा संमुख कुण्ड तुण्ड परतन्त्र सुमुखकूबर सदामल्लधोरण वैज-यन्त तीर एकावल असुर आढक सदातुवर पिप्पलेत्यादयः) ॥

रेफद्दष्टस्सिना अउ ।

अकारोकारौ प्रथमैकवचनाग्रस्थरेफादिशब्दैः श्लिष्टौ भवतः । यथा-वटोरम्यः । उकान्तपक्षे पञ्चमी षष्ठी वा । शब्दा यथा—(पट कट रङ्क काक सशङ्क वर चार केत कन्द उत्त्रप दार तर्क वाह शुम्भ मय बहु भर सदा उडु गोमया भूरिमाय उत सदाकार सक्त पर मद्य स्तन प्रभ जराय अवट अन्ध तालेत्यादयः) ॥

अऊ उवत् कृतक्लीवविशेषणतया तु ऊ ॥ ८९ ॥

यथा-अकारान्ता उकारान्तास्तथा ऊकारान्ताः पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उकारविधिना श्लेषः । यथा-अतिवधोरम्यतरः प्रकारः क्रूरान्तरारिषु स्वसमानो मुनिमण्डलस्य । ऊकारान्तपक्षे अतिक्रान्ता वधूर्येन मुनिमण्डलेन तदति-वधु, तस्याऽतिवधोः । शब्दा यथा-(आग आलाव यवाग परमन्द अधिभ प्रतिभ पुनर्भेत्यादयः) ॥

अए ङौ

अकारैकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः । एकारान्तशब्दानामबाहुल्यादकारसहि-तपूर्वाक्षराः शब्दा अर्थे मिलति ग्राह्याः । यथा-अधिकेवलसंस्थितिः । परहेरम्बसल्लक्ष्मीः । अकारान्तपक्षे सप्तमी । शब्दा यथा-( भेक केवली केलि केतु केश केदार केसर क्रमेलकादयः ) ॥

दृष्टरेफेण भिसा गौणतया अए ।

अकारैकारौ तृतीयाबहुवचनेन पुरःस्थसमासरेफादिशब्दैः श्लिष्टौ भवतः । यथा-सदासन्नैरम्यः । ऐकारान्तानामप्यबाहुल्यादैकारसहितपूर्वाक्षराणामैकाराग्रस्थरेफाणां शब्दानामर्थे मिलति ग्रहणम् । यथा—कैरवभैरवादयः । सिद्दष्टघोषवदाद्यैर्न सन्धिः, संहिताया अभावेन विरामविवक्षणाद्विसर्ग एव ॥

अऊ

अकारोकारौ प्रथमैकवचनाग्रस्थघोषवत्पूर्वाक्षरवर्यादिशब्दैः श्लिष्टौ भवतः । यथा-नवोवर्यश्रीः । अकारान्तपक्षे सिः । उकारान्तानामप्यबाहुल्यादोकारसहितपूर्वाक्षराणाम् उकाराग्रे अकारघोषवद्भ्यां युक्तानां शब्दानां ग्रहणम् । यथा-कोरक गोलक चोलक

नयोधस्थितिरित्यादौ उकाराग्रे अकारः। कोयष्टिः कोदण्डः कोद्रवः उच्चक्रोधवत्स्थितिः कोलसल्लक्ष्मीः पोगण्ड गोधन इत्यादौ उकाराग्रे घोषवन्तः । पुरोद्योतः, अधिकोपगतः इत्यादौ जसिः । पक्षद्वयेऽपि समास उद्योताद्यैः ।

उलीलया अउ

अकारान्ता उकारान्ता यदा तदा पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना श्लेषः । यथा-अत्यासन्नोरुचिरः स्वतुल्यः कुलस्योदयः । पक्षे अतिक्रान्ता आ सामस्त्येन सन्नौर्येन कुलेन तत् अत्यासन्नु, तस्याऽत्यासन्नोः । एवं द्यौः । एवमन्येऽपि ॥

गौणत्वे आ अवत् ॥ ९० ॥

आकारान्ताः शब्दाः पूर्वमन्यविशेषणत्वेनाऽकारान्ताः क्रियन्ते, पश्चादकारविधिना सर्वस्वरैः श्लेषः । इकारेण यथा—पुरे प्रचुरशाले रम्यता शरत्केदारस्येव । शालापक्षे सप्तमी । शालिपक्षे पञ्चमी षष्ठी वा । शब्दा यथा—(शाला सन्धा विनता प्रहेला हेला बहुलाला परमहाला महाशीला मुक्ता कान्ता कलेत्यादयः) । इकारेण यथा—(घटा बहुलाला परमहाला सुरुचिज्वाला महाशाला ) इत्यादयः । बहुलालीभूतः । उकारेण यथा—(मन्या सूना कम्बा वला त्रपा अम्बा मृगयादयः) । धृतत्रपोरम्यः । ऊकारेण यथा—(भा प्रतिभा अधिभा पुनर्भा कच्छादयः) । अतिभोरम्यः प्रचारः । स्ववृत्त्यधिकवृन्दस्य ॥

च्विना आमि ङसि स्वरे ईई ।

इकारेकारौ च्विप्रत्ययेन तथा आम्ङस्भ्यां तथा स्वरैश्च श्लिष्टौ भवतः । यथा-सदावलीभूतः । सदावलीनां सदावल्ल्योः सदावल्ल्यनुगतादयः । शब्दा यथा—(अवि महाशालि अधिकालि प्रचुरालि नन्दि आलि मल्लिवलीत्यादयः) ॥

इउ ङौ

इकारोकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः । यथा-विधौ प्रीतिः । शब्दा यथा-(अणिहेति कटितरि सदारि शरारि उच्चारि सदाद्रिप्रभृतयः) ॥

क्लीबवृत्तित्वे इऊ उविधिना तथा ॥ ९१ ॥

इकारोकारौ यदा क्लीबे तदा ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना श्लेषः । द्वेधापि विशदवधो कुले ॥

इए ङसिङसौ रेफे

इकारैकारौ पञ्चमीषष्ठ्येकवचनेन पुरस्थरेफादिरम्यप्रमुखशब्देन श्लिष्टौ भवतः । यथा—सदासेरम्यः । एकारान्तशब्दानामभावात्सेशब्दः कल्पितः । इना सह वर्तत इति सेः, सकाम इत्यर्थः । सदासेरभसाटोपः ॥

ङौ यवलोपिस्वरे इए ।

इकारैकारौ सप्तम्येकवचनेन यवलोपिस्वरे श्लिष्टौ भवतः । यथा-सदारा आटोपः अरिरैः ॥

सम्बोधनसंयोगेन यवलोपिस्वरे इऊ ॥ ९२ ॥

इकारोकारौ सम्बोधनप्रथमैकवचनेन यवलोपिस्वरे श्लिष्टौ भवतः। यथा कट इह। कटि कटु ॥

इओ ङौ

इकारौकारौ सप्तम्येकवचनेन यवलोपिस्वरे श्लिष्टौ भवतः। यथा—सदाशनौरतः ॥

क्लीबवृत्तिस्त्वे ई इवत्

ईकारान्ताः क्लीबविशेषणत्वेन इकारान्ताः क्रियन्ते, तत इवत् सर्वस्वरैः श्लेषः। इकारोकारेण यथा—स्वीकृतपटौ मित्रे प्रीताः। शब्दा यथा—( तनी अपटी कटी वटी सदावटी तरी चरी करी चारी वारी दारी, उकारेण तनी तनू भी भू ) प्रभृतयः ॥

तद्धिया उऊ।

तस्य ईकारस्य धीस्तद्धीस्तया ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना सर्वस्वरैः श्लेषः। उकारान्तौ च्विप्रत्ययेन वा श्लिष्टौ। तन्दूकटूप्रभृतयः ॥

अम्प्रयोगादनुस्वारः

द्वितीयैकवचनेनाऽनुस्वारश्लेषो भवति। यथा—अधिकंबलं वहन्, रुचिरांगणश्रियं बिभ्रत्, पुरोगांगेयरुचिं दधत् ॥

विसर्गः श्रीसमैः पुरः ॥ ९३ ॥

श्रीस्थितिप्रायैः पदैः पुरस्थैर्विसर्गश्लेषो भवति। यथा—परागश्रीः, महस्थितिः ॥

स्यादि-त्यादिविभक्तिश्लेषो, भाषाश्लेषः, प्रकृतिश्लेषोऽपि भङ्गश्लेषोपायेन साध्यः। विभक्तिश्लेषो यथा भवति। पक्षे—भवति रोहितः। पक्षे—भवेन तिरोहितः। स्यादिपक्षे विभक्तीनामलोपः समासेन लोपो वा क्रियते। भवतः। स्यादिपक्षे तव शिवतो वा। एवं सर्वत्र ज्ञेयम्। भवन्तिरोहिताः। भवसितत्वश्रीः।भवामिततश्रीः। भवावस्थित्या। राजतिरोहितेत्यादि।

भाषाश्लेषो यथा—किम्पि केवलं पुरवञ्चन कलिआ नाधो कधम्। अर्थैक्ये भाषाश्लेषे समसंस्कृतप्राकृतादिशब्दाः प्राकृतलक्षणेन ज्ञेयाः। यथा—सुरभयहरिणनरकुलेत्यादयः।

प्रकृतिश्लेषो महःस्थित्यादयः। एवमष्टविधोऽपि श्लेषः प्रपञ्चितः ॥

श्लेषभेदो यथा—

वर्णभाषालिङ्गपदप्रकृतिप्रत्ययैस्तथा।
विभक्तिवचनाभ्यां च श्लेषः सञ्जायतेऽष्टधा ॥९४॥
कलपवर्योऽत्र भङ्गोऽभूदाकारेकारवर्णयोः।
स्वर्गलाभविभाऽशोभी पदभङ्गसमुद्भवः ॥९५॥
लिङ्गश्लेषे तनुर्नेत्रे बाह्याः कैरवराजिनी।
हरउमे सुरमणो संस्कृतप्राकृतोद्भवः ॥ ९६ ॥
दारिद्र्यकृद्रिपौ मित्रे कृत्प्रकृतिभङ्गतः।
गौरीभूतगुणोपेत ई च्विप्रत्ययभङ्गभूः ॥ ९७ ॥
त्वमत्रारचयश्चक्रे त्यादिस्यादिविभक्तिजः।

बिलसद्रूमान इत्यत्र बह्वेकवचनोद्भवः ॥९८॥
वर्णादीनामभङ्गे तु राजा मृदुकरस्थितिः ।
संसारसारमर्थैक्ये संस्कृतप्राकृतोद्भवः ॥ ९९ ॥

यमकोपायमाह—

समानस्वरवर्णानुप्रासतः श्लेषतस्तथा ।
स्याद्वर्णपदपादानामावृत्त्या यमकं द्रुतम् ॥ १०० ॥

अनुप्रासश्लेषोपायाः पूर्वोक्ता एव ।

हेलाविडम्बितहिरण्मयरत्नशृङ्गाः शृङ्गारभासुररुचः सहचारिकान्ताः ।
कान्तारभूवसतयोऽत्र चरन्ति सारं सारङ्गचञ्चलदृशो मरुतां महेलाः ॥
भवति वृद्धिकृते कमलागमो जिनमतो न मतो नमतो मम ।
न रतिदाऽमरभूरुहकामधुक् सुरमणीरमणीरमणीयता ॥
वनस्यान्तर्लसत्यत्र रतिभूतरुचाऽरुणः ।
सुरौघः स्त्रीसखो रत्नैरतिभूतरुचारुणः ॥

वक्रोक्तिविरोधाभासप्रश्नोत्तरपुनरुक्ताभासा अपि श्लेषसाध्याः । यथा—

तरणिं पश्य सुश्रोणि ! नाथ ! कुत्रास्ति नौरिह ।
सवितारं प्रिये वच्मि प्रिय ! दूरेऽधुना पिता ॥
भात्येष मेरुरुचिरोऽपि नमेरुशोभी कृत्स्नामिलामपि वहन्ननिलाभिरामः ।
सव्यालवालमपि चन्दनपादपानां नव्यालवालमभितो वहते समूहम् ॥
मूर्ध्ना वहन्ति के कुम्भौ मुग्धा श्लिष्टा ब्रवीति किम् ।
क्रियते कुञ्जरास्यस्य किमु सम्बोधनं बुधैः ॥
गजानन ।
प्रद्योतनोऽम्बुजानां सविता महसां विकर्तनस्तमसाम् ।
निखिलजगच्चक्षुरसावम्बररत्नं रविर्जयति ॥

इति श्रीजिन० श्लेषसिद्धिप्रताने तृतीय अद्भुतस्तबकश्चतुर्थः ॥

---

अथ चित्रप्रपञ्चः ।

स्यात् स्वरव्यञ्जनस्थानगत्याकारनियन्त्रणा ।
च्युतगूढादि वा चित्रं च्युतं तत्र चतुर्विधम् ॥ १०१ ॥
मात्रार्धमात्रयोर्बिन्दुवर्णयोश्च्यवनान्मतम् ।
क्रियाकारकसम्बन्धपादैर्गूढं चतुर्विधम् ॥१०२॥

स्वरादीनां नियन्त्रणानियमः स्वरचित्रम् । यथा—जय सकलनयकलन जय मदनमददलन जय कमलकरचरण जय सभयजनशरण । ह्रस्वैकस्वरम् । एवं दीर्घैकस्वरद्वित्र्यादिस्वरनियमो ज्ञेयः । एकस्वरादिशब्दाः सुप्राप्या इति न दर्शिताः ॥

व्यञ्जनचित्रं यथा—

ककाकङ्ककाङ्काङ्का केकिकेकाकुका ककुप् ।
कौ कं कङ्ककोकैककाकं काककाकुकम् ॥

वर्षावर्णने ककुप् वर्तते । जात्येकवचनम् । किंभूता ककाकंककांकाङ्का कका लोलाः काकङ्काः सुखागमना ये काङ्का मेघास्ते अङ्को लक्ष्म यस्याः सा। कक लौल्ये, भ्वादिरात्मनेपदी । ककन्ते ककाः पचाद्यच्, कं सुखं तद्धेतुः आकङ्क आगमनं येषान्ते काकङ्काः । ककिवकीत्यादिना, भ्वादिरात्मनेपदी ककधातुः आङ्पूर्वः । आकङ्कनं आकङ्कः, भावे घञ् । कं जलम् अङ्के उत्सङ्गे येषान्ते काङ्का जलभृतः । पुनः किम्भूता केकिकेकाकुका । केकिनो मयूराः तेषां केका ध्वनिविशेषास्तासां कुका ग्राहिणी । कुक वृक आदाने, भ्वादिरात्मनेपदी । कोकते कुका, नाम्युपधात्कः । कौ कं कङ्कको-कैककाकं, तथा कौ पृथिव्यां कं जलं वर्तते, किंभूतम् कङ्ककोकैककाकम् कङ्काश्च को-काश्च तेषामेकोऽद्वितीयः काको रवो यत्र तत्। कङ्का पक्षिविशेषाः, स्वार्थे कः। कोका-श्चक्रवाकाः। कायति अर्थमभिधत्त इति काकः शब्दः। "इण्भीपाकाशृत्वर्चिकृदाधारिभ्यः कः" । पुनः किंभूतम् काककाकुकम् काककञ्च काकुकञ्च तत्, केन आत्मना आककं कुटिलगामि । अक अग कुटिलायाङ्गतौ, भ्वादिः परस्मैपदी । अकतीति आककम् ण्वुल् । काकुर्ध्वनिविशेषस्तं करोति 'अन्यतोऽपि चे'ति डः ॥

अथैकाक्षरादिशब्दाः कादिक्रमेण लिख्यन्ते । यथा—( कु ककुप् काकु क कि केका कः एकाकी किं कः कौ के कान् कं का के काः कां के काः किं के किम् के । अकं पापादौ । काकं काकसमूहादौ । को ब्रह्मादौ । कं शीर्षादौ । काका काकजङ्घादौ । अङ्को भूषणादौ । एकः सङ्ख्यादौ । कङ्को यमादौ । काको द्विजादौ । कोकश्चक्रादौ । ककुद् राजचिह्नादौ । खमिन्द्रियादौ । खोऽर्कः। आखुर्मूषकः । गः गन्धर्वादौ । गं गीते । गौः स्वर्गादौ । अगो वृक्षादौ । अङ्गं शरीरादौ । इङ्गम् इङ्गितादौ । आगो मन्त्रादौ। आगूः प्रतिज्ञायाम् । गङ्गा गौः गाम् अङ्ग । घः घण्टीशे । घा किङ्किण्यादौ । अघं दुःखादौ । ओघः प्रवाहादौ । चश्चन्द्रादौ । चञ्चुस्त्रोट्यादौ । चञ्चूः चञ्चुवत् । चञ्चु-प्रत्ययश्चित् उश्च । चोचं वल्कलम् । जो जैत्रादौ । जुर्नभोवागादौ । अजो ब्रह्मादौ । आजिर्युद्धादौ । ओजो बलादौ । अजाः आजूः । टो रवे । टं पृथिव्याम् । अट्टो हट्टादौ । आटिः अट अटात् आटीत् । डः शिवादौ । इडा बुधाङ्गनादौ । ईड स्तुतौ । णो निष्फलादौ । ईडा अणिरिवाक्षाग्रकीलादौ । अणुर्व्रीह्यादौ । एणः तस्करादौ । ता श्रीः । अन्तः प्रान्तादौ । ईतीः रजन्यादौ । ऊतिः रक्षादौ । एतः आगमादौ । ततं वीणादिवाद्ये । ततो व्यासादौ । यातः पित्रादौ । तृट् पिपासादौ । तन्तु तुक अपत्यं आतिः । तन्तुः जलजीवविशेषे । अन्तर उतः प्रोते । ऊतः स्यूते । तत्—शब्दः तौ ते तम् तौ तान् तैः ते ताः तत् ते उत् । अति अतः एतिः ततिः तान्तः इति । एतौ एते एतम् एतौ एतान् एतैः एते एताः एताम् एते एताः एतत् एते उत् । थः शैलादौ । अथ अथो । दं पत्न्याम् । दा दानादौ । दृग् नेत्रादौ । अन्दूर्निगडादौ । दिश् इन्दुः वसुदेवे । दोः आदिः । इदम् अदः अदात्

ददे ददौ । धा धनदादौ । धुर्भारादौ । अन्धोऽक्षिहीनादौ । आधिर्मनःपीडादौ । अन्धस् धीः ऊधः अन्धु एधस् एध । धुर यानमुखादौ । अधः अधिक् । नो बन्धादौ । निर्नेतरि । नु स्तुत्याम् । नौस्तर्याम् । अन्नं भक्तादौ । इनः स्वाम्यादौ । उन्नः, क्लिन्नादौ । ना नो आनन अन्नः नुन्न नाना ननु न नो नूनम् अनु ऊनः एनम् एनाम् अनेन एनः । पः पवनादौ । पूः पुरादौ । पूः अपूपः आपं पापम् । पपी रविः । अपि अप पम्पा । उपा आपत् आपि । उपा निशेये । वो वरुणादौ । विः पक्ष्यादौ । बिम्बं प्रतिबिम्बादौ । अम्बा अम्बु बिम्बी । बवयोरैक्यमिति वोऽप्यत्र । वः शिवादौ । अविर्मेषादौ । वाक् वचनादौ । विवार अव एव इव वा है आवाम् व विश् अवाक् वित् आविः विः । भः शुक्रादौ । भास् कान्त्यादौ । भं भा भूः भूस् भीः भं भा भोः उभा आभा अभि भुक् इभ भित् भाक् भो भिः आभिः एभिः भात् अभाः । मः शिवादौ । मा लक्ष्म्यादौ । मास् मासादौ । मूर्बन्धने । आमोऽपक्वादौ । उमा गौर्यादौ । मुत् हर्षादौ । इमौ इमे इमम् इमौ इमान् इमे इमाः अमू अमी अमुम् अमून् अमूः । अमा सहार्थे । मा वारणार्थे । मां मे मम अमात् । यो मारुतादौ । यं पशौ । या यानादौ । ययुर्वाहादौ । युध अयस् आयुः अये अयम् अयि आयाः यः यौ ये यम् यौ यान् यैः ययाः या ये याः याम् ये याः यया यत् ये अयात् अयाम् ययौ ययुः इयाय ईयुः । रः स्मरादौ । रीर्भ्रान्तौ । रुः सूर्यादौ । रैः धनादौ । अरोऽष्टादशो जिनः । अरम् चक्राङ्गादौ । आरो भौमादौ । आरा चर्मभेदिनी । इरा जलादौ । रुरुर्दैत्यादौ । रुक् शोभादौ । अरर अररिः द्वौ कपाटे । रिरी रीरी द्वौ आरकूटे । रुज् रेरे उरु अरुः ईर उर उरस् रुष राज् अरि अर अरे रे आरत आरात् अराः ररौ ररुः ररे आर आरुः । ल इन्द्रादौ । लूर्लवे । ली श्लेषादौ । अलिर्भृङ्गादौ । आलिः श्रेण्यादौ । आलुः कन्दादौ । इला भूम्यादौ । लीला विलासादौ । लोलश्चलादौ । लोला जिह्वादौ । ईली शस्त्री उलूलः आलुः करपत्रिका । अलम् हरिताले निरर्थे च । लाला अलिन् अल वृश्चिकपुच्छदण्डिका लुलन् ललन् पुला अण्डल आलप्रत्ययौ एड आली लाली एल अलात अलु ललौ ललुः लले । डलयोरैक्यमिति डोऽप्यत्र ज्ञेयः । शं शुभे । शा सास्नायाम् । शी शयने । शुर्विधौ । अंशुः किरणादौ । आशा दिगादौ । आशुर्व्रीह्यादौ । ईशः शिवादौ । शशाशी अंशः । आशीः मङ्गलवागादौ । शुक् शिशुः । ईशा हलदण्डे । आशु । षः श्रेष्ठे । षू गर्भविमोक्षे । उषा निशादौ । उषः सन्ध्यादौ । ईषा । सः परोक्षे । सा लक्ष्म्याम् । सत् अंस असूज् सीसं सत् अस असिः सौ सा असौ आसन् आसीत् आसे । हो हस्तादौ । अहिः सर्पादौ । ईहा स्पृहादौ । अहः हाहा हूहू ऊह हदू अंह इह हे है अहो हं हो अहह ह हाहा आह आहुः । एवमन्येऽप्यूह्याः ॥

ऋः कृष्णे ॠ स्वयम्भूरिः काम ई श्रीरुरीश्वरः ।
ऊ रक्षणे ऋॠ ज्ञेये देवदानवमातरौ ॥ १०३ ॥
लृर्देवसूर्लॄर्वाराही भवेदेर्विष्णुरैः शिवः ।
उर्वेधा ऊरनन्तः स्यादों ब्रह्म परमः शिवः ॥ १०४ ॥

को ब्रह्मात्मप्रकाशार्ककेकिवायुयमाऽग्निषु ।
कं शीर्षेऽम्बु सुखे कुस्तु भूमौ शब्दे च किं पुनः ॥ १०५ ॥
स्यात् क्षेपनिन्दयोः प्रश्ने वितर्के च खमिन्द्रिये ।
स्वर्गे व्योम्नि नृपे शून्ये सुखे संविदि खो रवौ ॥ १०६ ॥
गस्तु गातरि गन्धर्वे गं गीते गौर्विनायके ।
स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि ॥ १०७ ॥
जलेऽह्नि घस्तु घण्टीशे घा किङ्किण्यां वधे ध्वनौ ।
ङस्तु भैरवविषयेच्छयोश्चश्चन्द्रचौरयोः ॥ १०८ ॥
छः सूर्ये छेदके छन्तु निर्मले जस्तु जेतरि ।
विगते जूर्नभोवाचि पिशाच्यां जवनेऽपि च ॥ १०९ ॥
जो नष्टे गायने चारुवचने घर्घरध्वनौ ।
टं पृथिव्यां करङ्के च टो ध्वनौ ठो महेश्वरे ॥ ११० ॥
शून्ये बृहद्ध्वनौ चन्द्रमण्डले डं शिवे ध्वनौ ।
जापे ढा निर्गुणे शब्दे ढक्कायां णस्तु निष्फले ॥ १११ ॥
ज्ञाते तस्तस्करक्रोडपुच्छयोस्ता पुनः श्रियाम् ।
थो भीत्राणे महीध्रे दं पत्न्यां दा दातृदानयोः ॥ ११२ ॥
छेदे बन्धे च धा गुह्यकेशे धातरि धीर्मतौ ।
धूर्भारकम्पचिन्तासु न पुनर्बन्धबुद्धयोः ॥ ११३ ॥
निस्तु नेतरि नुः स्तुत्यां नौस्तर्यां पस्तु पातरि ।
पवने जलपाने च फो झञ्झाऽनिलफेनयोः ॥ ११४ ॥
फुस्तु फूत्कारे निष्फलभाषणे बः प्रचेतसि ।
कलशे बिः खाण्डजयोर्भमुडौ भोऽलिशुक्रयोः ॥ ११५ ॥
भा कान्तौ भूर्भुवि स्थाने भीर्भये मः शिवे विधौ ।
चन्द्रे शिरसि मा माने श्रीमात्रोर्वारुणेऽव्ययम् ॥ ११६ ॥
मूः पुनर्बन्धने यस्तु मातरिश्वनि यं पशौ ।
यस्तु यातरि खट्वाङ्गे याने लक्ष्म्यां च रो ध्वनौ ॥ ११७ ॥
तीक्ष्णे वैश्वानरे कामे राः स्वर्णे जलदे धने ।
रीर्भ्रमे रुर्भये सूर्ये ल इन्द्रे चलनेऽपि च ॥ ११८ ॥
लु लवे ली पुनः श्लेषे वलये वो महेश्वरे ।
वरुणे मारुते वः स्यादौपम्ये पुनरव्ययम् ॥ ११९ ॥
शं शुभे शा सास्नायां शीः शयने शुर्निशाकरे ।
षः श्रेष्ठे षूः पुनर्गर्भविमोक्षे सः परोक्षके ॥ १२० ॥
सा लक्ष्म्यां हो निपाते च हस्ते दारुणि शूलिनि ।
क्षः क्षेत्रे रक्षसीत्युक्ता माला प्राक्सूरिसम्मता ।
नाम्नामेकार्थनानार्थैकाक्षराणामियं मया ॥ १२१ ॥

धूर्यानवदने भारे पूः शरीरे पुरे तथा ।
दृग् द्रष्टृदर्शनेऽप्यक्षिणि विट् प्रवेशे नृवैश्ययोः ॥ १२२ ॥
तृड् लिप्सायां पिपासायां भा प्रभावे महस्यपि ।
मास्तु मासे विधौ चैते युक्पादान्तोपयोगिनः ॥ १२३ ॥
अकं दुःखाद्ययोरङ्को भूषारूपकलक्ष्मसु ।
चित्रादौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागमे ॥ १२४ ॥
एकोऽन्यः केवलः श्रेष्ठः संख्या च परिकीर्त्यते ।
कङ्को यमे लोहपृष्ठे तथा ब्राह्मणलिङ्गिनि ॥ १२५ ॥
काकः पीठसर्पिणि स्याच्छिरोत्रक्षालने द्विके ।
द्वीपमानद्रुभेदेषु काकं काककदम्बके ॥ १२६ ॥
योषितां रतबन्धे च काका तु काकजङ्घिका ।
काकोदुम्बरिका काकमाचिका रक्तिका तथा ॥ १२७ ॥
काकोली काकनाशोऽथ कोकश्चक्रे वृकेऽपि च ।
खर्जूरी पादपे भेके स्यादगस्तु महीरुहे ॥ १२८ ॥
शैले सरीसृपे भानावङ्गमन्तिकगात्रयोः ।
उपसर्जनभूते स्यादस्त्युपायप्रतीकयोः ॥ १२९ ॥
अङ्गानि वृद्धिशेषे स्युरिङ्गः स्यादिङ्गितेऽद्भुते ।
ज्ञानजङ्गमयोश्चाऽघं दुःखे व्यसनपापयोः ॥ १३० ॥
ओघः प्रवाहः सङ्घातोऽद्भुतवृत्तपरम्परा ।
उपदेशश्च चञ्चुस्तु त्रोट्यां पञ्चाङ्गुले तथा ॥ १३१ ॥
अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।
आजः क्षणे समदमायां युध्यट्टोऽट्टालके भृशे ॥ १३२ ॥
चतुष्कभक्तयोर्हट्टे इडेले च बुधस्त्रियाम् ।
गोत्राकूस्त्रभूमिनाडीषु तथा स्यादणिराणिवत् ॥ १३३ ॥
अक्षोऽश्रकीलेऽश्रौ सीमन्यणुर्व्रीह्यल्पयोः पुनः ।
अन्तः प्रान्ते च पार्श्वे च स्वरूपे निश्चये तथा ॥ १३४ ॥
नाशावयवयोः स्यादीतिरजन्यप्रवासयोः ।
स्याद्यूतिः स्यूतौ रक्षायामेतः कर्बुर आगते ॥ १३५ ॥
ततं वीणादिवाद्ये स्यात्ततो व्याप्तेऽनिले पृथौ ।
तातोऽनुकम्प्ये जनकेऽन्दूः स्यान्निगडभूषयोः ॥ १३६ ॥
अन्धोऽन्धकारेऽक्षिहीने स्यादाधिर्बन्धकाशयोः ।
मनोर्तौ व्यसनेऽधिष्ठानेऽन्नं श्वसितभक्तयोः ॥ १३७ ॥
इनः स्वामिनि सूर्ये स्यादुन्नं क्लिन्ने दयापरे ।
बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले ॥ १३८ ॥
आमोऽपक्के रोगभेदे रागयोः स्यादुमा पुनः ।

शिवपत्न्यां हरिद्रायां कीर्तिकान्त्यतसीष्वपि ॥ १३९ ॥
ययुर्यज्ञहये वाहे स्यादरोऽष्टादशार्हति ।
भवत्यरं तु चक्राङ्गे शीघ्रशीघ्रगयोरपि ॥ १४० ॥
आरो रीरी शनिर्भौमे आरा चर्मप्रभेदिनी ।
इराऽम्भोवाक्सुराभूषु रुरुर्दैत्यकुरङ्गयोः ॥ १४१ ॥
अलिः सुरापुष्पलिहोरालं तु हरितालके ।
तथा निरर्थके ज्ञेयमालिस्तु विशदाशये ॥ १४२ ॥
अनर्थे सख्यामावल्यां सेनावालुर्गलन्तिकाः ।
आलुः कन्दे भेलुकेऽपी लोर्वा गौर्वाक् वुधाङ्गना ॥ १४३ ॥
लीला केलिर्विलासश्च शृङ्गारभावजक्रिया ।
लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः ॥ १४४ ॥
अविर्मेषे रवौ भूमिधरे मूषककम्बले ।
अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ ॥ १४५ ॥
आशा ककुभि तृष्णायामाशुस्तु व्रीहिशीघ्रयोः ।
ईशः स्वामिनि रुद्रे च स्यादीषा हलदण्डके ॥ १४६ ॥
उषा स्याद्बाणदैत्येन्द्रनन्दिन्यां रजनावपि ।
आगः स्यादेनोवदघे मन्तावाशीर्हितैषणे ॥ १४७ ॥
उरगस्य च दंष्ट्रायामुषः सन्ध्याप्रभातयोः ।
उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः ॥ १४८ ॥
अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ।
ऊकस्त्वाश्रममात्रेऽहिभुजङ्गे वृत्रवप्रयोः ।
ईहोद्यमस्पृहेत्येते द्विस्वरैकाक्षरा मताः ॥ १४९ ॥
अथाऽव्ययानि कथ्यन्ते प्राग्वदेव स्वरक्रमात् ।
अः स्वार्थेऽप्यस्वभावेऽपि स्यादा स्मरणवाक्ययोः ॥ १५० ॥
आङीषदर्थेऽभिव्याप्तौ क्रियायोगेऽवधावपि ।
आ स्यादवधृतिस्मृत्योराः सन्तापप्रकोपयोः ॥ १५१ ॥
इः स्यात् खेदे प्रकोपोक्तावी क्रोधे दुःखभावने ।
प्रत्यक्षे सन्निधौ चाऽपरुषोक्त्यामन्त्रणार्थयोः ॥ १५२ ॥
उः प्राधान्ये प्रकाशे च प्राबल्यास्वास्थ्यशक्तिषु ।
विभागे बन्धने मोक्षे भावे लोभोर्ध्वकर्मणोः ॥ १५३ ॥
उं प्रश्नेऽङ्गीकृतौ रोषेऽप्यूं प्रश्ने रोषवाचि च ।
ऋ कुत्सावाक्ययोरेऐ हेहैशब्दाविव स्मृतौ ॥ १५४ ॥
आमन्त्रणाह्वानयोरों प्रणवेऽङ्गीकृतावपि ।
उऊशब्दौ तु होहौवत् हूतौ सम्बोधनेऽपि च ॥ १५५ ॥
कः पापीयसि कुत्सायामीषदथ निवारणे ।

कं सुखे वारिशिरसोः किं प्रश्ने कुत्सनेऽपि च ॥ १५६ ॥
चोऽन्योन्यार्थसमाहारान्वाचयेषु समुच्चये ।
हेतौ पक्षान्तरे तुल्ययोगिताविनियोगयोः ॥ १५७ ॥
पादपूरणेऽवधृतौ तु विशेषेऽवधारणे ।
समुच्चये पादपूर्तौ धिक् निर्भर्त्सननिन्दयोः ॥ १५८ ॥
नि स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि ।
सन्निधानोपरमयोः संश्रयाश्रयराशिषु ॥ १५९ ॥
मोक्षेऽन्तभावेऽधोभावे बन्धने कौशलेऽपि च ।
नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः ॥ १६० ॥
नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः ।
व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि ॥ १६१ ॥
वा समुच्चय एवार्थे उपमानविकल्पयोः ।
विशिष्टेऽतीते नानार्थे वै हेतौ पादपूरणे ॥ १६२ ॥
शं कल्याणे सुखे संप्रकृष्टार्थसङ्गमार्थयोः ।
शोभनार्थे समार्थे ह सम्बुद्धौ पादपूरणे ॥ १६३ ॥
हा शुगदुःखविषादेषु हि हेताववधारणे ।
विशेषे पादपूर्तौ च ही विस्मयविषादयोः ॥ १६४ ॥
दुःखहेतौ च हं रोषभाषणेऽनुनयेऽपि च ।
हुं तर्के प्रश्नेऽङ्ग पुनरर्थे सम्बोधने मुदि ॥ १६५ ॥
अति प्रोक्तप्रकर्षार्थे लङ्घनार्थभृशार्थयोः ।
स्तुतावसंप्रतिक्षेपे आराद् दूरसमीपयोः ॥ १६६ ॥
इति स्वरूपे सान्निध्ये विवक्षानियमे मता ।
हेतौ प्रकारप्रत्यक्षप्रकाशेष्ववधारणे ॥ १६७ ॥
एवमर्थे समाप्ते स्यादुत प्रश्नवितर्कयोः ।
समुच्चये विकल्पे चाऽथोऽथ स्यात्समुच्चये ॥ १६८ ॥
मङ्गले संशयारम्भाधिकारानन्तरेषु च ।
अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि ॥ १६९ ॥
अनुर्लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ ।
सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः ॥ १७० ॥
नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावववधारणे ।
वाक्यारम्भेऽनुनयेऽप्यामन्त्रणाऽनुज्ञयोरपि ॥ १७१ ॥
नाना विनोभयानेकार्थेष्वप्यस्तेयहर्षयोः ।
अपकृष्टे वर्जने च विपर्ययवियोगयोः ॥ १७२ ॥
निर्देशार्थे विकृत्यर्थे विबुधैः परिकीर्त्यते ।
अपिः संभावनाशङ्कागर्हणासु समुच्चये ॥ १७३ ॥

प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च ।
उपासन्नेऽधिके हीने सादृश्यप्रतियत्नयोः ॥ १७४ ॥
तद्योगव्याप्तिपूजासु शक्त्यावारम्भदानयोः ।
दाक्षिण्याचार्यकरणदोषाख्यानात्ययेषु च ॥ १७५ ॥
अभिर्वीप्सालक्षणयोरित्थंभूताभिमुख्ययोः ।
स्यादमा सन्निधानार्थे सहार्थेऽलं निवारणे ॥ १७६ ॥
अलङ्करणसामर्थ्ये पर्याप्तिष्ववधारणे ।
एवं प्रकारेऽङ्गीकारेऽवधारणसमार्थयोः ॥ १७७ ॥
नूनं तर्के निश्चये वाऽपि प्रश्नेऽनुनयेऽपि च ।
अये क्रोधे विषादे च स्मरणे सम्भ्रमे तथा ॥ १७८ ॥
अन्तर्मध्येऽन्ते स्वीकारे ऊर्युररी तथा ।
विस्तारेऽङ्गीकृते वाऽव वियोगे व्याप्तिशुद्धिषु ॥ १७९ ॥
आलम्बने विज्ञाने स्यादेवौपम्येषदर्थयोः ।
निकारेऽवधारणे स्यादुषा रात्रितदन्तयोः ॥ १८० ॥
अतः स्यान्निर्देशे पञ्चम्यर्थे हेत्वपदेशयोः ।
इतो विभागे नियमे पञ्चम्यर्थे च कीर्त्यते ॥ १८१ ॥
तत आदौ परिप्रश्ने पञ्चम्यर्थे कथान्तरे ।
अहा धिगर्थे शोके च करुणार्थविषादयोः ॥ १८२ ॥
अह क्षेपे नियोगे चाऽप्यहो प्रश्नविचारयोः ।
हीही हास्ये विचारे स्यादन्ततोऽवयवे तथा ॥ १८३ ॥
उत्प्रेक्षायां पञ्चम्यर्थे शासनेऽप्यहहः स्मृतः ।
खेदाऽद्भुतयोरित्युक्तोऽनेकार्थाऽव्ययसङ्ग्रहः ॥ १८४ ॥

अथैकाक्षरा धातवः—भू सत्तायाम् । पा पाने । जि ज्रि अभिभवे । इन्दु श्रु गतौ । ऋ प्रापणे । दैप् शोभने । कै गै रै शब्दे । खै खदने । जै सै क्षये । पै ओरै शोषणे । उख ऊख इख ईख अग इग गतौ । अञ्चु गतौ । जज जजि युद्धे । अट पट गतौ । उठ संघाते । इट मतौ । लोटृ लौडृ उन्मादे । अड उद्यमे । लड विलासे । अड्ड अभियोगे । अत गतौ । अड्ड बन्धने । इदि परमैश्वर्ये । अम शब्दे । अम मीमृ गतौ । शुच्य अभिषवे । इवि व्याप्तौ । अव गतौ । शश प्लुतगतौ । ईष उञ्छे । परस्मैभाषा ॥

मीङ् गतौ । डीङ् विहायसागतौ । उङ् इङ् शब्दे । कुङ् गतौ । रुङ् रोषणे च । पूङ् पवने । मेङ् प्रणिदाने । देङ् पालने । कक लौल्ये । कुक आदाने । कङ्क गतौ । अघि गत्याक्षेपे । इङ् डुङ् गतौ । ईज कुत्सने । अट्ट हिंसातिक्रमयोः । एठ विबाधायाम् । अठ गतौ । दद दाने । एध वृद्धौ । अठ शब्दे । उङ् शब्दे । अय गतौ । वेञ् तन्तुसन्ताने । ईष गतिहिंसादर्शनेषु । ईह चेष्टायाम् । ऊह वितर्के । आत्मनेभाषा ॥

णीञ् प्रापणे । हृञ् हरणे । भृञ् भरणे । धृञ् धारणे । कृञ् करणे । अङ् पृङ् गतौ । अल भूषणपर्याप्तिवारणेषु । झष आदानसंवरणयोः । अस कस गत्यादानयोश्च । उभयतोभाषा ।।

धृण् सृङ् गतौ । वृत वर्तने । वृत् द्युतादिमध्यात । आत्मनेभाषा ।।

वेञ् तन्तुसन्ताने । वृत् । यजादिपरस्मैभाषा ।।

अक अग कुटिलायां गतौ । लड जिह्वोन्मथने । परस्मैभाषा । इति भ्वादयः ॥

अद भक्षणे । भा दीप्तौ । वा गतिगन्धनयोः । पा रक्षणे । ला आदाने । रा दाने । दाप् लावने । मा माने । इक् स्मरणे । इण् गतौ । वी प्रजनकान्त्यसनखादनेषु । षु प्रसवैश्वर्ययोः । तु गतिहिंसापूरणेषु । पृ यु मिश्रणे । कु शब्दे । अस भुवि । षस सस्ति स्वप्ने । परस्मैभाषा ।।

इङ् अध्ययने । शीङ् स्वप्ने । षूङ प्राणिगर्भविमोचने । ईड स्तुतौ । ईर गतौ कम्पने च । ईश एश्वर्ये । वस आच्छादने । आङः शासु इच्छायाम् । आस उपवेशने । आत्मनेभाषा । इत्यदादयः ॥

हु दानादनयोः । ओहाक् त्यागे । भी भये । पॄङ् शालनपूरणयोः । ऋङ् गतौ । परस्मैभाषा ॥

डुदाञ् दाने । डुधाञ् धारणपोषणयोः । भृञ् पोषणे च । उभयतोभाषा । इति जुहोत्यादयः ॥

शो तनूकरणे । दो अवखण्डने । छो छेदने । षोऽन्तकर्मणि । इष गतौ । सूच् निरसने । उच समवाये । वृधु वृद्धौ । असु क्षेपणे । परस्मैभाषा ।।

पूङ् प्राणिप्रसवे । दूङ् परितापे । दीङ् क्षये । धीङ् अनादरे । धीङ् आधारे । मीङ् हिसायाम् । रीङ् श्रवणे । लीङ् श्लेषणे । वीङ् गतौ । एते नव स्वादयः ॥

वृङ् गतौ । अन प्राणने । आत्मनेभाषा । इति दिवादयः ॥

षुञ् अभिषवे । षिञ् बन्धने । शिङ् निशामने । मिञ् प्रक्षेपणे । चिञ् चयने । धूञ् कम्पने । कृञ् हिंसायाम् । वृञ् वरणे । उभयतोभाषा ।।

हि गतौ वृद्धौ च । दूङ् उपतापे । प्रीङ् प्रीतौ । आप्लृ, व्याप्तौ । परस्मैभाषा ।।

हिङ् गतिवृद्ध्योः । अशू व्याप्तौ । आत्मनेभाषा । इति स्वादिः ॥

तुद व्यथने विभाषितः । धि धारणे । षूद क्षरणे । षू प्रेरणे । णू स्तवने । धू विधूनने । परस्मैभाषा ।।

कुट कुड शब्दे । कुटादिः । धृङ् अनादरे । धृञ् अनवस्थाने । आत्मनेभाषा । इति तुदादिः ॥

अञ्जू व्रक्षणकान्तिगतिषु । उन्दी क्लेदने । परस्मैभाषा ।।

जिइन्धी दीप्तौ । आत्मनेभाषा । इति रुधादिः ॥

ऋषी गतौ । उभयतोभाषाः । इति तनादिः ॥

षिञ् बन्धने । मीङ् हिंसायाम् । दीङ् संवरणे । उभयतोभाषा ।।

रीङ् गतिरेषणयोः । ली श्लेषणे । शॄ हिंसायाम् । भॄ भरणे । भॄ भर्त्सने । दॄ विदारणे । जष् झष् वयोहानौ । गॄ शब्दे । ऋ गतौ । मृड सुखने । अश भोजने । इष आभीक्ष्ण्ये । परस्मैभाषा ।।

वृङ् संभक्तौ । आत्मनेभाषा । इति क्र्यादिः ।।

पॄ पूरणे । श्रु श्रवणे । अट्ट अनादरे । लड उपसेवायाम् । ओलड् उत्क्षेपणे । ईड स्तुतौ । भुवोऽवकल्कने । अव उत्क्षेपे । अज वीट अन्ह भाषार्थाः । परस्मैभाषा ।।

यु जुगुप्सायाम् । गृ विज्ञाने । लल ईप्सायाम् । आत्मनेभाषा ।

अङ्कु लक्षणे । अङ्क पदे लक्षणे च । अघ पापकरणे । अन्ध दृष्ट्युपसंहारे । आम आमन्त्रणे । परस्मैभाषा ।।

ली द्रवीकरणे । आप्लृ लम्भने । ईर क्षेपे । भू प्राप्तावात्मनेपदी । इति चुरादिः ॥

नीलीनानलिलोनैलाललनानलिनानना ।
ललन्नलिननालेनालीलुन्नेनललौनना ॥

द्व्यक्षरः ।

अथ द्व्यक्षराः शब्दाः । यथा—

आलोक कल कीलाल कलङ्क काल अलका काली अलीक एक कुण्डल कला केलि कल कील कलि काल कोल कुल कूल लोकम् लोक आकुल कङ्क कलिका कालिका कल्लोल लङ्का लक कंकेलि कील किलकिला किलकिल अलीक अलक लङ्का टीका कटक कटकटी कटककूट कोटि कीट कीटिका कण्टिका कुटी कुट्टाक कटुकम् कटटम् कअट्ट अटक कृत्तिका कृतान्त कान्त कुन्त अङ्कित कौतुक कङ्क कतकी केतक केतकी आकूत आतङ्क कान्ति कृत्त अक्त उक्त मुक्त अर्क कार कारक राका कारिका क्रूर कीर वीर कोरक कारा रङ्कु·आकर आकार अङ्कुर करि करीर किरि कर्करक आरक कारु किर अकरोत् कारा अकिरत् नाक कानन कनक आनक अनेक नाकि अनीक अनीकिनी द्यौः द्युः दया दायाद दययादः यदु देयात अदायि उदय उदाय आदाय इन्दूदय दिवि देव विदिक् वेद विदुः वेदवाद वन्दे वदिव वदावद दव अम्बुद वद वदेत् अवदत् अववाद विवाद बुद्बुद अमर मरु रामा मार रमा रोम मेरु रुमा आम्र मस मर्म सुर असुर सूर आसार अस्तु सार सौरि सरसा सारस मस्तु असु उस्र सर सार सरु सुरा अमृत मृत मातृ तमप्रत्यय तमस् तातमीति मिमित मत अमुतः माति मातु मत्तम् मत्त ततामि अतमि तेमे लेखा आखण्डल खण्ड खल अखेल अखेलत् अखेलि खेलत खलु अखिल खिल लेखा सुधा सन्धा सौध सिन्धु सीधु साधु असेधत् असेधि ससाध असाधि अनूरु नर नीर नारी विधु बुध विधि वेधाः बन्ध वध वेध बाधा अधावत् अधावि धत्र वधू सोम मास सम असम सामन् मांस मीमांसा सुम सीमन् सीमा असमत असमि अससामत् तारा उत्तरा तरस् तरु तीर रुत रत रेतस् अतरत अतारि तेरुः अन्तर तरु इतर अर्ति आर्त अत्र अत्रि अन्त्र आतुर आद आर्द्र रौद्री रौद्र रुद्र इन्दिरा दर दूर दारुदार

दु अद्रि उदर रोदः अरुदत् अरोदीत् रुरोद अरोद अरोदि आदर उदार इन्दिन्दिर दुरोदर रद कक्षा कक्ष कुक्षि आकाङ्क्षत् अकाङ्क्षि अक्ष अक्षि इक्षु उक्षन् धारा धरा धराधर धार राधा रुधिर रोधस् धुरन्धर अधरत् अधारि धुर धुरा रवि अम्बर वीर वारंवारम् विवर वार वर वैर वारि आरवे उर्व्वी उर्वरा अर्वत् वव्रे वैरि वर रव अरुण रणरोण अरिणा आरेण अरेणि आरण अर्णः ईरण रणन् रणरण रेणु ऊणा ऊर्णा अरुणत् अराणीत् अराणि रराण भानु नाभि नभस् सन्निभ पूषा पौष पिपेष पुपोष अपुषत् अपेषि अपोषि हेलि हलि हल हली हेला दिन नन्दन नन्दिन् दीन दनु निन्दा नाद दून नदी दान नद निदान निन्दु निनद नाद इन्दुना निनिन्द ननन्द ननाद नदीन नन्दन ननाद नुनोद त्रिभा विभव भव भाव विभाव भुवम् भुवः भुवाम् भावी वैभव विभु अभवत अभूत बभूव अभावि बभूवे भास अभासि सभा हरिः षोडशार्थः, राहु हरित हर रहः रंह हार होरा हार हूरा आहार हीर अहरहः हारि आरोह आरुरोह अहारि अर्हः ही अर्ह अहि रोचिः रुचिः रुचः अर्चिः अर्चा चर्च चारु चर्चरी चर चार आचार चराचर चारु चारी चञ्चुर चीर चौर चिरम् चिरा रुचिर चचार रुरुचे रुचे अरुचत अचूचुरत् अरीरचत् घृणि घृणा अभीशु शम्भु शुभ शोभा शुशुभे शुशोच शोच शची शुच शौच धाम मधु अधम इध्म आधमत धूम सुधा मेधा पाद पादप अपादि पदे पद वसु वासव संवित् आसव सव वास आवास संवास सेवा बासस् अवसत् उवास महा महस् मही महिमन् मुमोह मिमेह महान् मोह हिम हेम होम तेजस् जाति जाती जित जात तज जन्तु जातु जतु जेता आतप तताप तपः तप ताप तेपे पात पेते पपात तप्त पीत पूत अतीतवत् पितृ पौत्र हेति हति हत हन्त आहुति हुत हित हत आहत शाप शप शशापे पशु पाश पशी शम्पा अशपत गल गलि गेल गुड गोला गोल गण्ड गल्ल गिल अगलत अलगत् अगालि लङ्ग लगु लगुड यशः आशय शय अशायि शय्या शिश्ये आलाप लोप लोलुप अलुपत् अलूलुपत अल पाल पलि लेप पाण्डु पाल फल लुप पील पीडा आपीड आललाप लुलोप लुलुम्प पाल लिपि उलप उडुप उपल उल्लाप अन्य नय न्याय नयन आनन योनि यान यून अयन अन्योन्यम् आनाय आनीय आनिनाय देश अदिशत् दिशः दश दशा दंश उद्देश आदेश आदिदेश गीत गति गत उत्तुङ्ग गन्तु गीता आगन्ता गाति नट नटन वाल बाल अबला बला लव अलवत् अलावीत् वला लव लूल वली आवलि आलम्ब वेत्ता वित्त वृत्ति योगि याग योग गेय गाय अगायत् अगायि पान पीन आपान अपान आपीन पुनः ताल लता ताली तालु उत्ताल तल तूल तैल लता तुलित तुला अतुल लाति लातु पल विल एल वलि वल बल अलीलवत् अलूलवत् वात वृत्त निवृत्त तावत् एतावता वृत्तान्त वृन्त वेता वाता धन धेनु निधि निधान इन्धन उग्र गौर गौरी रङ्ग राग रोग अग्र गुरु गार गिरि गिरा रङ्गत रङ्ग उरग अङ्गिरस् अगार अङ्गार रोगी रागी आगः अगिरत् अग्रे मृड मङ्गल मुण्ड मण्ड मौलि माल ललना मल्ल मल्ली अम्ल लोम अमल मिमील अमिलत् शिव शिवा शीव विश्व विश विशा आवेश वश वशा वशी अविशत विवेश शौव आर्या आर्य अय

राय ईर्या अरयः ऐयरुः दिति अदिति उदन्त दन्त दन्ति दान्त दुत तदा तुन्द ददि आददति दूत दूति उदात्त दत्त उदेति उदित ददातु ददाति ददते दत्ते तुदति तुदतु हव हाव बाहु बाहवि बहु बहिः वाहा हाव विवाह आहव आहाव अवहत् उवाह हविः बह्वो वही उशनाः शनि निशा अशनिः ईशान शनैः नाश अनिश शुना शूनः नाश ननाश कवि कम्बु बक कम्बो अम्बिका केवा मन्द अमोद मुदा मोद मिमेदे दम मादाः सायम् सेयम् सोयम् असूया आय अयसा यस्या अयास्यन् दोषा दोष जीव बीज वाजि जव अजीवत् अजीजवत् जिजीव आयाम यम याम मयु मय अमेय आमय माया कुहु कुह माघ मेघ मोघ मघा शिशिर शरत् शौरि शूर राशि शर सहस् सहसा सेहा हास हंस सोहम् सिंह साहस सेहे असह् गगन गान नाग नग अनङ्ग काश आकाश कौशिक कुशिक केश कुश अङ्कुश शशक शकम् शुक कोश अशोक शङ्का शूक अनन्त नृत्त नीति नत नति तेन ततान तेने आनीत तनु तनू नूतन नुन्न नेता नुति अभ्र भर भार भीरु भूरि भरो रम्भा आरम्भ वियत् वयस् वायु यव वायु युवन् अवयन् उवाय घन घनाघन कुकुल ककुभ कुम्भ भेक कुम्भी अपाचि चम्पा चम्प अपचत् अपीपचत् चाप चम्पू पर पार पुर पूर पौर अपर अपार अरोप पुरी उदीची उदञ्चत् जम्भ अभजत् अभञ्जि अभाजि भेजे भाज अम्भोज भोज भुज पवि वापी अवपत् अपीपवत् उवाप पीवा अतिभी भूत भीति भित्ति भीता भाषा अभाषि भूषा भिषक् भीषा वचस् वाचा वचा वञ्च अवोचत् उवाच वीचि चञ्चु वाच अगमत् गम आगम मागाः छन्दः आच्छाद उच्छेद अच्छिदत् धातुः धाता धौत आधौत अधीते अधीत अधत्त धत्ते धत्तः कंस सेक कसा अकसन् अकासि अङ्गज गज जगौ काम मूक मोक किमु कामिन् कामुकवाणी वीणा वणिक् वेणी बाण सती सीता सुत छत सित असित आसित सन्ति सन्तु सतत सन्तत सेतु सोता सात मेना मेनाक मनाक् मान मुनि मौन नेमी नमि नौमि नुमः नामन् मेने मीन मनस् मानिन् जय जाया जय जेय अजयत् जीयात् यज युयोज सेना सेनानी सूना आसन्न आसीन आसन नासा गुहा गुह हिङ्गु गूह अगूह अगाहि चण्डी चण्ड उच्चण्ड चौड चल अञ्चल अचल चेल चोल चञ्चल चलाचल चावलि चूला चुल्ला चुल्ली चञ्चा अलोच अचलत अचालीत् चचाल भृङ्गी भृङ्ग भोग भग भाग भङ्ग भागी भोगी जड जाल लाजा ]। एवमन्येऽपि ज्ञेयाः ॥

स्थानमुरःकण्ठादि, तच्चित्रम् । यथा—

नेताऽनन्तनतोऽनन्तः सोऽद्यालासीदिलातले ।
धुतासिदासितोत्तालदनुसूनुनुतः सदा ॥

दन्त्यस्थानः ।

प्राज्यसत्त्वोर्जितस्फूर्तिचर्यो मर्यादयान्वितः ।
समुद्रवदमुद्रश्रीः सज्जो जयति सज्जिनः ॥ १ ॥

अकण्ठ्यः । एवमन्यत् । एते शब्दाः सुप्राप्यत्वान्न दर्शिताः ॥

गतिर्गतप्रत्यागतगोमूत्रिकातुरगपदपादगतप्रत्यागतार्द्धगतसर्वतोभद्राऽर्धभ्रमादीति।

तच्चित्रम् । यथा—

शूरः स्थिरतरस्फारशरभारधरः पुरः । आरवैरभरस्मेरवीरवारहरः परः ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शू | स्थि | त | स्फा | श | भा | ध | पु | |
| रः | र | र | र | र | र | रः | | रः |
| र | र | र | र | र | र | र | रः | |
| आ | वै | भ | स्मे | वी | वा | ह | प | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| शू | स्थि | त | स्फा | श | भा | ध | पु | |
| र | र | र | र | र | र | र | रः | रः |
| आ | वै | भ | स्मे | वी | वा | ह | प | |

गोमूत्रिकाद्वयं पूर्वार्धापरार्धयोः, अथवा आद्यद्वितीययोः, तृतीयचतुर्थयोश्च पादयोरिति द्वौ भेदौ ।

अथ तुरगपदरीत्या श्लोकाक्षराङ्कन्यासः—

श्रीत्रिंशन्नवविंशतित्रयजिनश्रीकण्ठषड्विंशती-
न्दूनाविंशतियुग्मपौषदशभावेकत्रयोविंशतिः ।
सत्रिंशद्विपसत्कलाभुवनतत्षड्वर्गवर्णा शुभ-
त्सेनापक्षसुलक्षणस्वरसभासार्कद्विविंशाः शराः ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ३० | ९ | २० | ३ | २४ | ११ | २६ |
| १६ | १९ | २ | २९ | १० | २७ | ४ | २३ |
| ३१ | ८ | १७ | १४ | २१ | ६ | २५ | १२ |
| १८ | १५ | ३२ | ७ | २८ | १३ | २२ | ५ |

तुरगपदाऽक्षराङ्कन्यासः ।

चतुर्भिः पादैः क्रमेण चत्वारः पादाः, प्रतिपादमष्टौ अङ्कस्थानानि । श्रीः एकः । जिनाश्चतुर्विंशतिः । श्रीकण्ठा एकादश । इन्दुकलाः षोडश । ऊनाविंशतिरेकोनविंशतिः । पौषदिनान्येकोनत्रिंशत् । भानि सप्तविंशतिः । सत्रिंशदेकत्रिंशत् । कलाः सप्तदश । भुवनानि चतुर्दश । तन्मुख्य एव वर्ण एकविंशतितमः । वर्गाः पञ्चविंशतिः । सेना अष्टादश । पक्षतिथयः पञ्चदश । लक्षणानि द्वात्रिंशत् । स्वराः सप्त । सभानि अष्टाविंशतिः । सार्कास्त्रयोदश । द्विविंश द्वाविंशतिः । शराः पञ्च । शेषं सुगमम् ॥

हयपदस्य रीत्यन्तरम्—

हदूयपीहिपैयिदायैपिहादुयादिहोपे । देहैपयूपुहुदयीपायेदैहेदीयुपूहु ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ह१ | दू | य | पी | हि | पै | यि | दा |
| यै | पि | हा | दु | या | दि | ही | पे |
| दे | है | प | यू | पु | हू | द | यी |
| पा | ये | दै | हे | दी | यु | पू | हु |

तुरगपदबन्धः ।

हयपद इति चत्वारो वर्णाः, श्लोकेऽपि चत्वारः पादाः, ततो यथाक्रममेकैक-पादं प्रत्येकैकवर्णो ज्ञेयः । स्वरैरक्षरसंख्या ज्ञेया । अ आ इ ई उ ऊ ए ऐ, इत्यष्ट-स्वराः । श्लोकपादे चाऽष्टवर्णाः । यथा-ह हा हि ही हुँ हू हे है, य या यि यी यु यू ये यै, प पा पि पी पु पू पे पै, द दा दि दी दु दू दे दै, अयं श्लोकस्तुरगपदेन कृतो, हदूयपीत्यादि ।।

का रता निजहावेन
नवेहाजनितारका ।
चारुमारपराधीन
न धीरा परमा रुचा ॥

पादगतप्रत्यागतम् ।

एवमर्धगतप्रत्यागतादीनि ॥

अनुलोमप्रतिलोमशब्दा यथा—[ दिवं दिवा दिवे नाके देवा देवं देव नवदेवता खेल खेलन दान वर वीभानु भानो द्योतन हंस हंसा हेलि दिन दिना यादीने विभा भासः विकर्तन जगच्चक्षुः धामाकरं करे महातेजाः सदा लोक सदालोकःविनता कलङ्का तारका तारया कालिनी राधा राधया हरि देव जीवा भार्गव कविना रादो वातापिना कालो कालं शावं निशया तमा तमिस्रा याम माया मेया मतः पक्षि राका मास मासे सहा माधव नभ तप कल्पान्त क्षय गगन बलाहकाः सुत्रामा शुनासीर जम्भा देव नन्दी नन्दन वन मय यमराज राक्षसाः पलादो नलकूबर रस विभवेन शङ्करम् व्रती हर हरम् पिनाकेपि पिनाकिनागङ्गा कपालिना मेना भैरवी हेरम्ब हेरम्बा विनायक नन्दी स्थविर विधाता पि वेधसा जनार्दन दामोदर सनातन वनमालिका विशुकैटभा वैनतेय कंसा कंसे नन्दकरामा सहसान्वितः बलाबलं बला नालीका रमा रमया मदन पातालौकः भारती वेदाः वेदना वेदैः वत वह लोक सार निन्दा शापा तुङ्गम् यन्त्र ताल रव तालाघना तोय घनयोः वशा वश कच्छपिका कोलम्बक तत मृदङ्ग रागरागौ हस हास हासि कार दरदा अट्टहास अतिहास शोक कोश कोप उद्यम उद्योग अतिभी आन्तकम् कटकी कटकम् कम्पम् कम्पा रोदना रणरण ककाम मेधा मोक्ष मद शयन संलये शङ्का नवतमसम्मद सानन्दा तत गर्व साहङ्कारं सहङ्कारा ममतामानेन स्मयेन साहमहमिका सम्भावनं सम्भावना सम्भावनया कार्पण्य रत दैन्यवती सव्यामा श्रमता मोहो सत्र सत्रा आवेश दम सभ्रमता

उच्चयन साध्याहार वितर्क मनिश कालेन कालो सायम् वासना मारका यन्त्र विभावेन विभावा ततभावि अनुभावतः व्यक्त वनभावोन रस एषा भूमिका पात्र वेष महासासभरत रसा पुत्र रङ्ग रङ्गावतार रतागारसा नसावतार रङ्गावतार कर क्षम सकल शैलाली नामधारक धनधारक सरवक वसु नान्दी वास वासन्तिक गैहासिकोपिता अबुकं चिर हास भावुकं भावो राज हावा हेवा हावेन कुमार कुमारा दारक बाला स्वसा भदन्त निजा योज्या मन्तुजमनुजा मानव पोत वशा क्षीर शैशवे नसवालता वयः तरु युवा नतारुण्यपुलक चारुण्यङ्ग यौवनं प्रवयाः जरयात याम विशसा स्थविर जल्पाक यद्वद पतन यद्वदपरमा दीनवादिवंदिता विकस्वर वदान्यामदविधेयो दवानशूलिका स्वैरितापरवश पराधीन स्थावरव्यायाम नाल कविवर्णना मेधा विवित विशारद सशनिमनीषितोविपत निष्णातोन्तः रक्ष कुशलेन दमप्रतिभान्वितः अन्तर्वाणि रसावेद वदावद पतापत घनाघन वे दुर्विधोः मनः निम नियोज्य परिचारक दास वस्वतन भारिक भासे अलङ्कातरभीतेन महेच्छस्वया महामनाः कीनाश किंपचान देवा अनुक्रोश कदनं बन्धनं निर्वासन निर्वापणक वर्जन कर्तन कल्पन जल्पना अवर्द्धनैः घातोद्यत आततायिन नामालेखियशः तेमृतासरतापार्ण व्यंसक जालिक कैतव सभ्यापिशुना व्यसनार्त्तक स्तेना ऐकागारिक स्तेय नन्द प्रणव दान त्याग अर्थ व्यय याचका याचन सहन अशनाय रोचक पिपाछ पिपासा रसा दानमस्तु तरलानिला निष्ठा नते मन रम्भा लाजा शून्य रसायन दानव भारं सभा वितं काञ्चनी धान्य धान्याक नागरम् विदेही जनुके ग्रासो लावक उदार कामना व्यसन बन्धन रोचन मांस पीवानं पीवर अनासिके तनु गता केशव वातकि रोम सदा सदामय पामा रव अक्षत कल नीलीराग लेखक कुलिक खेलिनी शिवङ्कर शबल जवी वेग रंहः तर सेवा देवेन जव जाव सहा योगामिका गारव जात्यक्षवंश वनिता वशा वासा तरललोलना मनोज्ञ कहाव रजाः यातरः वया विना समे सुता मालिनी गर्भ पौत्र वै जन नमास देवर गोलक समान ननान्दा नवर केलिना देवन पिता महसा उपमाता घना काय देहः कुन्तला पाशा रचना केशांश कशा केशे लपन वदन लोचन विलालन निध्यान द्योतन लोम रदन रदना दशना पक्ष्मा मेलक करजा खननातालिका मेद कङ्कालम् बलम् लव सानन्द विलेपना यक्षकर्दम घनसार स्थासक कम्बलम् नववसन शयन बोध ऊर्ध्व लोक अमराः असुराः विमाना गभस्ति वसुधा सुधा अर्य्यमा तरुणि अ अर्य्यस अर्कतः पतङ्ग विरोचन हरि आतपो आतपी लक्ष्मप मङ्गल अङ्गारक उशना आगस्त्या उपराग वासर विभात त्रियाम तिमिर हेम अल्पक अन्तरिक्ष आकाशम् अम्बरम् अनघ बलाहका आसार आपरा विदिक् कौशिक मातलि अमरावती मन्दार सन्तान अतिभी लेखक कौणप यातुधान कुबेर धनदा अलका अणुस्था अजगवम् अलीका महादेवी एकदन्त शतानन्द उत्सवश्रीः नरक अलम्ब अङ्गज दनुज सरस्वती अतिहास वैनतेय अर्थवाद कौलीन विगान आक्रोश आक्षेप अभिख्या सम्भाषा नियोग गन्धर्वेण अनुत्तरे च वर्ण अन्ववायजनन धाना अक्षत पत्रल उपल दधिसार न्याय अदन आशंसा अविनीत क्षारित मांसल मांसल विकलाङ्ग पाटव राजयक्ष्मा कुरङ्ग उपचार हरिद्रा राग व्राती सभासद

पीत दम्भ अङ्गमर्दक ऊर्ध्वन्दम अतिजव जवन आराधना धन्योसि बक पदाति आवे-शक पाद्य सम्मता ग्रामेय कुलीन रामा ललना अङ्गण उपमानेन विलास चर्या वल्लभा दम्पती भोगिन्यौ स्वतन्त्रा मातुलानी श्यामा कात्यायनी वारवधू आक्षेप संवेशन दोहद आसन्नसत्वा कलल दास सोदर अवरज कनीयान् मातुला ननान्दा ननन्दा नन्दिनी हाली परीहास देवन उपमानी वीरमाता श्वशुर पितर त्राता बान्धव आयतन खालक कुणप कबन्ध अवयव राशिक लाप भ्रमरक अलका भ्रमरा लक संयता सीमन्त केशपाश काकपक्ष वेष्टन भावनीय अवलोकन निशामन द्योतन अयाङ्ग विकार नासिका जीभा रसना कन्धरा अनामिका कामाङ्कुश तिलक रोमलता आरोह जघन वराङ्ग जङ्गल पलल परिकर्म अङ्गराग संवर्त्तन कोलक नायिका तरल ललामक लज्जा कर्णपूर कर्णिकाहारी अङ्गद वलय रसना सारसन कार्पास उचल जलार्द्र ललिम तलिमा यावक कज्जल दीप पार्थिव त्रिशङ्कु ] ।

एकार्थत्वेऽनुलोमप्रतिलोमशब्दा यथा—[ कलङ्क पतदातप वासवा कौशिकौ विभवि कालिकः तावता कारिका कोरको नयन अपलाप वर्त्तन नन्दन साध्वसा वरभैरव कलपुलक कटक कण्टक नध्यान जाड्यजा नपुनः दैत्यदैः महेम आकर्णिकआ यासुया कोलको योत्थयो रत्यार विभाविवि यातया नाद्येन जायाजा कचसूचक नान्दीनाम् हासीहा हावहा सूरिसू दक्षद वाचवा लोहलो स्वेच्छास्वे तानेनेता गोप्यगो भीरभो पापा शय्याश बत-कैतव दम्भद साभ्यासा नार्दना कचकनवेन नव्येन लगुड कांक्षकां कामुका अर्हणार्हअ वलीव केशके वरयारव उपतापउ कोपतापको जायुजाकच्छक सरस निधनि विधवि स्यदस्य सहास जनज जात्यजा गोत्रगो योन्वयो जननज कान्ताकाम् स्मितास्मि भावभा हावहा हेलाहे गौरीगौ मध्यम तरुणीरुत जनीज सूनुसू याजाया वनीजनीव दम्पतीपद योग्ययोः साध्वीसा यातिया द्वंद्वं दोहदो कललक योनयोः यामेया श्रद्धाश्र दास्यदा रदसोदर बान्धवा गात्रगा देहदे भारभा हस्तह केशाङ्के भालेभा दंष्ट्रादं दन्तदं दंशदं नद-खदन तालुता पाणिपा पललप लङ्काकङ्काल अङ्गरागअं कण्ठिकं काञ्चिकां कंचुकं तल्पतः जनुजः भूरिभूः नुततनु कनक ] । एवमन्येऽपि ज्ञेयाः ॥

आकारः खड्गाद्याकृतिस्तच्चित्रम् । यथा—

श्लेषार्थोपसङ्गृहीतैरन्त्यादिसदृशाक्षरैः ।
प्रतिलोमानुलोमस्थैः शब्दैश्चित्रसमुद्भवः ॥ १८५ ॥

श्लेषव्युत्पादनस्तबके सदृशान्त्यक्षरान्तरसदृग्व्यञ्जनादिशब्दैः प्रभाभास्वत्प्रमुखै-रत्र चित्रस्तबके संगृहीतैरनुलोमशब्दैश्च सर्वाण्याकारचित्राणि संभवन्ति ।

सर्वेष्वाकारचित्रेषु वर्णावृत्तिस्तु सन्धिषु ।
लाघुच्चारे लघ्वलघुप्रयत्ने वबयोरपि ॥ १८६ ॥

संयुक्तयोः सजातीयवर्णयोर्णनयोस्तथा ।
स्वरवर्जितमनयोर्विसर्गाभावभावयोः ॥ १८७ ॥

डलयोश्च विरोधो न यमकश्लेषचित्रयोः ।

गतार्थम् ॥

भारती भक्तगीर्वाणगणस्तुतपदाम्बुजा ।
जाग्रत्कुन्देन्दुमन्दारशारदभ्रसमप्रभा ॥
भास्वदम्भोजनिलया निर्भाग्यजनदुर्लभा ।
भागधेयं भावभृतां तनोतु प्रतिभामयम् ॥




खड्गबन्धः ।

नभोवननदीपोननलिनाननलोचनम् ।

न नौमि न नयानूनं नमज्जननतं जिनम् ॥



अष्टदल-कमलबन्धः ।

विश्वावरोधाय विरोधबाधकाविपत्तमोजालविकर्तनोर्जिताः ।

विधुदयद्धामविशुद्धकीर्तिभा विभान्ति सन्तः सविवेकवैभवाः ॥

वाचं स्मृत्वा यतीन्द्रेण काव्यकल्पलता कृता ।
तारश्रीरमरेणेयं भावनीया सतां गणैः ॥

परिधिश्लोकः ।



अष्टार-चक्रबन्धः ।

गणेशोऽङ्गगलत्त्वङ्गगङ्गासङ्गरलोरगः ।
गरभुग्गगनाभोगगतिस्तुङ्गगणानुगः ॥



अष्टदल-
कमलबन्धः

एवंविधश्लोकैर्बहुचित्रसिद्धिः । शूरेत्यादिपूर्वोक्तगोमूत्रिकासदृशैः श्लोकैर्गोमूत्रिकाद्यम् ।



षोडशदल-
कमलबन्धश्च ।

एवं बहुचित्रोत्पत्तिश्च । एवं मुरजधनुर्बन्धादयः ।

क्रमाच्चतुर्विधं च्युतम् । मात्राहीनीकृतेषु वर्णेषु येषां शब्दनामर्थो मिलति तैः शब्दैर्मात्राच्युतं स्यात् । यथा—

देशान्तरावृतान् भावान् कालातीतानपि स्फुटम् ।
केवलं ज्ञानतो योगी प्रत्यक्षानिव वीक्षते ॥

देशकालकेवलैः । शब्दा यथा—[ वाल चार वीर पार कोमल केकि अलीक क्रूर वार मार हार कार तार दार पार धार स्फार सार ताल नाल हाल हेलि कृपाण उन्माद तडाग काच प्रवाल प्रहार भारत जाया ] प्रभृतयः ।

येषु शब्देषु अर्द्धमात्राहीनीकृतेष्वप्यर्थो मिलति तैरेवार्द्धमात्राच्युतं भवति । यथा-

मध्येसुरिसभं भूरि स्वीकृतानङ्गसङ्गमाः ।
न लभन्ते नराः शोभां भानीव रविभासुषु ॥

सङ्गमा इत्यत्र ङ्कारो व्यञ्जनयुतं व्यञ्जनञ्चाऽर्द्धमात्रकम् ।

ताडकाश्रितश्रृङ्गारा सारगानचलेक्षणा ।
आलोकितापि लोकस्य मनो हरति कामिनी ॥

अत्र ताडङ्कसारङ्गेति । शब्दा यथा—[ स्यन्द मन्द मन्थ भङ्ग सदरङ्ग सम्मद खज करञ्ज कबन्ध वन्दन नन्दन सम्भ्रम संवर सङ्गर कम्बल जम्बीर चित अञ्चल करञ्जादयः ]।

सानुस्वारवर्णेषु निरनुस्वारीकृतेष्वपि येषां शब्दानामर्थो मिलति तैर्बिन्दुच्युतं स्यात् । यथा—

साहसेनाश्रिता पद्मालयेन जलदात्यये ।
अर्णवस्याभिसरणे रहो मुह्यति वाहिनी ।।

अत्र हंसरंह-इत्यत्र बिन्दुः । शब्दा यथा—[ वंश हंस दंश रंहः ] प्रभृतयः । [ मीमांसा पिनाकि कुमार केशव कन्दर्प कलापि कपर्दी काकोल जवन जघन चरण गाङ्गेय गौरव केसर चुम्बक नक्षत्र नगर खञ्जन नगरञ्जन ] प्रभृतयः । अथवा—

नतनाकिमौलिमणिमण्डलीविभाभरभासुराङ्घ्रिसरसीरुहा सताम् ।
शिवशर्मणे भवतु भारती भृशं दृढजाड्यखण्डनदिनेशभाततिः ।।

अत्र नन्दिनीच्छन्दसि प्रतिपादमाद्याक्षरद्वयपाते रथोद्धतावृत्तेन, तथान्त्याक्षरद्वयपाते च भद्रिकावृत्तेन भारतीस्तुतिः । अयं वर्णच्युतप्रकारः छन्दोमर्माणि ज्ञात्वा साधारणशब्दैः साध्यः ।।

अथ चतुर्विधं गूढम् । क्रियागूढे भङ्गश्लेषाद्युपायैरेकाक्षरादिकाः क्रियाः प्रयोज्याः । यथा—

यथा यथा त्रस्तकुरङ्गनेत्रा प्रिया पुरो मेऽद्य तिरोहितश्रीः ।
महोदधेः स्फारतरङ्गभङ्ग्या तथा तथा प्रेममयं मुदाऽहम् ।।

अत्र मेद्यति, दधे च क्रिये । क्रिया यथा—[ अस्ति स्तः अस्मि स्वः स्मः ] । प्रणितिरोहितः । एवं भवति, यक्षति, प्रभृतिभ्यो रोहितः । [ बिभेति बिभीतः बिभीमः इयर्षि ददासि बिभृतः मिमते मिमे जिहाते स्यति स्य दूयते मीयते लीयते ] इत्यादि । [ आभा आरुः आश आणुः ईयुः ] प्रभृतयः ।।

कर्तृकर्मादिगुप्तादि भङ्गश्लेषेण साधयेत् ॥ १८८ ॥

यथा—

मा न कोपभृते पुंसि शाश्वतीं स्थितिमाश्रयेत् ।
शङ्केभ्यो नाप्नुयात्कोऽपि देशः प्राप्नोति कङ्कणैः ।।

पूर्वार्द्धे कर्तृगुप्तम् । मा, न लक्ष्मीर्न । उत्तरार्द्धे कर्मगुप्तम् । खेभ्य इन्द्रियेभ्यः, शं सुखम् । कणैः, कं सुखम् ।

सम्बन्धगूढमपि भङ्गश्लेषेण साध्यम्—

बालया पृथिवीपाल व्यलोक्यत तयाननम् ।
तदाप्रभृति तां चिन्ये स्मरः स्वशरवेध्यताम् ।।

ते आननमिति सम्बन्धो गूढः ।

पादगूढे चतुर्थपादवर्णाः पादत्रये क्षेप्याः । यथा—

त्वं दोर्बलादरौ देव सोद्रेकदरशंकुकृत् ।
त्वद्यशोऽरं मुदं दत्ते—

अत्र पादत्रये चतुर्थः पादो गुप्तः—'कुमुदोदरसोदरम्' ।। इति ।

द्वात्रिंशत्कोष्ठकेषु श्लोककरणविधिः—

प्राक्कोष्ठकेषु न श्लोकाः पूरणीया विचक्षणैः ।
केवलं प्रश्नवेलायां पादः कार्यो नवो नवः ॥ १८६ ॥

इति श्रीजिनदत्तसूरिशिष्यपण्डितवरश्रीमदमररचितायां काव्यकल्पलताकविशिक्षा-वृत्तौ श्लेषसिद्धिप्रताने तृतीये चित्रस्तबकः पञ्चमः सम्पूर्णः ॥

सम्पूर्णश्च श्लेषसिद्धिप्रतानस्तृतीयः ॥

---

## अथाऽर्थसिद्धिप्रतानः ।

तत्र प्रागलङ्काराभ्यासः—

उपमाद्यानलङ्कारानभ्यस्येदर्थसिद्धये ।
हृद्यं साधर्म्यमुपमा सोपमानोपमेययोः ॥ १ ॥
धर्मोपमावाचकयोश्चोक्तौ पूर्णा मता यथा ।
शशीवाऽऽस्यं मुदं दत्ते, लुप्तैकद्वित्रिलोपतः ॥ २ ॥
उपमानस्य लोपे तु रम्यं मुखमिवास्ति नः, ।
धर्मलोपे शशीवास्यं, लोपे धर्मोपमानयोः ॥ ३ ॥
कुसुमं मालतीतुल्यं न भृङ्गो लभते भ्रमन् ।
धर्मवाद्युपमानानां लोपे हरिणलोचना ॥ ४ ॥
एकस्मिन्नुपमेये तु बहूपमानयोगतः ।
अभिन्ने वाऽथ भिन्ने वा धर्मे मालोपमा भवेत् ॥ ५ ॥
अनयेनेव नृपति,र्धाष्ट्र्येनेव कुलाङ्गना, ।
कार्पण्येनेव कमला, कला गर्वेण दूष्यते ॥ ६ ॥
पीयूषमिव सुस्वादु,र्भास्वानिव विबोधकृत् , ।
ज्ञानीव तत्त्वनिष्णातः, सतां वचनविस्तरः ॥ ७ ॥
यत्र यात्युपमानत्वमुपमेयं यथोत्तरम् ।
सा भिन्नेनाऽप्यभिन्नेन धर्मेण रसनोपमा ॥ ८ ॥
साधोर्धीवत्तता विद्या, विद्यावद्दोषहृत् क्रिया, ।
क्रियावत्प्रीतिकृद्वाणी, वाणीवत्कीर्त्तिरुज्ज्वला ॥ ९ ॥
यस्यासीद्विमलं शास्त्रवद्वित्तं वित्तवन्मनः ।
मनोवद्दानं, दानवद्यशो, विश्वत्रयीमुदे ॥ १० ॥

परिकल्प्योपमेयं तु स्वेच्छया सविशेषणम् ।
सदृशस्योपमानस्य कल्पने कल्पितोपमा ॥ ११ ॥
उपकण्ठस्थवक्षोजयुग्ममस्या मुखं बभौ ।
सहस्रपत्रं पार्श्वस्थरथाङ्गमिथुनं यथा ॥ १२ ॥
उपमानोपमेयत्वं पर्यायेण द्वयोर्भवेत् ।
उपमेयोपमा मुखवदिन्दुरिन्दुवन्मुखम् ॥ १३ ॥

अथाऽभ्यासार्थमुपमावाचका उपमानानि धर्माश्च प्रपञ्च्यन्ते—

यथेववेत्यव्ययानि तुल्यमित्रारिवाचिनः ।
प्रतिबिम्बाद्याश्च शब्दा वतिकल्पमुखास्तथा ॥ १४ ॥
तद्धिता ध्वाङ्क्षरावीन्दुमुखीत्याद्याश्च वृत्तयः ।
स्पर्धते जयति द्वेष्टयनुकरोत्यादिकाः क्रियाः ॥ १५ ॥
यिन्कर्माधिकरणयोरायिः कर्तृसमुद्भवः ।
कर्मकर्त्रोर्णमित्याद्या उपमावाचकाः स्मृताः ॥ १६ ॥
राजादीनां शिवब्रह्मविष्णुशेषसुरेश्वरान् ।
सूर्येन्दुजलदोदन्वदग्निसिंहाद्रिहस्तिनः ॥ १७ ॥
भूभूरुहनभोऽम्भोजमरालगरुडानिलान् ।
पुरारामसरोमुख्यानुपमानानि कल्पयेत् ॥
भजन्ति भावाः सर्वेऽपि भावानामुपमानताम् ।। १८ ॥

षट्पदी ।

वेण्याः सर्पासिभृङ्गाल्यः, केशपाशस्य चामरः ।
नीलकण्ठकलापोऽपि, धम्मिल्लस्य विधुन्तुदः, ॥ १९ ॥
सीमन्तस्याऽध्वदण्डौ च, ललाटस्याऽष्टमीविधुः, ।
फलकं च, कपोलस्य चन्द्रमा मुकुरस्थलम् ॥ २० ॥
भ्रुवोः खड्गधनुर्यष्टिरेखापल्लववल्लयः, ।
दृशोश्चकोरहरिणमदिराः खञ्जनोऽम्बुजम् ॥ २१ ॥
नीलोत्पलं च कुमुदं, श्रुतेर्दोला च पाशकः, ।
नासाया वंशोऽधोमुखतूणीरशुकचञ्चवः ॥ २२ ॥
तिलप्रसूनदण्डौ चा, ऽधरस्य नवपल्लवः ।
बिम्बीफलं प्रवालं च, दन्तानां मौक्तिकावलिः ॥ २३ ॥
कुन्ददाडिमबीजानि हीरकाश्च, स्मितस्य तु ।
ज्योत्स्ना दुग्धं च पीयूषं, श्वासस्याऽम्भोजसौरभम , ॥ २४ ॥
जिह्वायास्त्वञ्चलो दोला, वाण्या भृङ्गीपिकीरवौ ।
सुधा मधु च, वक्त्रस्य शशी पङ्कजदर्पणौ, ॥ २५ ॥
कण्ठस्य कम्बुरंसस्य कुम्भौ, बाह्वोश्च वल्लरी ।
मृणाललहरीशाखापशाः, पाणिपदस्य तु ॥ २६ ॥

पल्लवोऽम्बुज,मञ्जुल्याः पल्लवो, नखपद्धतेः ।
रत्नताराप्रसूनानि, स्तनयोः स्तबकौ घटौ ॥ २७ ॥
कुम्भिकुम्भौ गिरी चक्रौ स्तम्बौ, मध्यस्य वेदिका ।
सिंहशक्ती च, रोमाल्या रेखामृणालवल्लयः, ॥ २८ ॥
नाभेरम्भोजमावर्त्तो ह्रदो विवरकूपकौ, ।
त्रिवल्या वीचिसोपाननिश्रेण्यो, जघनस्य तु ॥ २९ ॥
पुलिनं पीठफलके, नितम्बस्य स्थलं पुनः, ।
ऊर्व्वोः कदलिकास्तम्भेभकरौ करभस्तथा, ॥ ३० ॥
जङ्घायुगस्य च स्तम्भौ, गतेर्हंसमतङ्गजौ, ।
इमान्यन्यान्यपि स्त्रीभ्य उपमानं यथोचितम् ॥ ३१ ॥
पुंसोऽङ्गे तूपमानानां विशेषः कोऽपि कथ्यते ।
स्कन्धस्य वृषस्कन्धौ, बाह्वोरहीश्वरः ॥
हस्तिहस्तपविस्तम्भार्गलादण्डाश्च, वक्षसः ॥ ३२ ॥
एकैकेनापि धर्मेणोपमानं बहुधा भवेत् ।
धर्म्मा वर्णक्रियाकाराधाराधेयादयो मताः ॥ ३३ ॥

वर्ण्यस्य राजादेर्वर्णादिमध्यादेकैकेनापि धर्मेण रव्यादिरुपमानमनेकधा भवति ।
एक एवार्को बहुधोपमानं यथा—

नवार्क इव रक्तोऽयं, तमोभेदी स भानुवत्, ।
सद्वृत्तः सवितेवायं, कुले भात्येष खेंऽशुवत्, ॥
आदित्यवत्प्रतापी स, सद्दिनः स दिनेशवत्, ।
वसुभृत्स यथा सूर्यः, स्मेरपद्मः स सूर्यवत्, ॥

अभ्यासः स्याद्विभक्तीनामुपमानोपमेययोः ।
उपमावाचकानां च धर्म्माणां च विपर्ययात् ॥ ३४ ॥

विपर्ययात्सर्वत्र सम्बध्यते । विभक्तिविपर्ययादभ्यासो यथा—

स विपक्षान् प्रचिक्षेप तमःस्तोममिवाऽर्यमा ।
द्विषस्तं नाभियुध्यन्ते ध्वान्तोद्भेदा रविं यथा ॥
रविणेवान्धकाराणि तेन चिक्षिपिरे द्विषः ।
द्रुह्यन्ति दुर्जनास्तस्मै घूका इव दिवाकृते ॥
तत्रत्यः शत्रवस्तस्माद् घूका इव दिवाकरात् ।
तपोवद्विपवस्त्रस्तास्तस्यार्कस्येव तेजसा ।
रवाविवोदिते तत्र शत्रवो ध्वान्तवद्गताः ॥
षट्पदी ।

उपमानोपमेययोर्विपर्ययाद्यथा, उपमानं यद्भवति तदुपमेयं क्रियते—

विजयी विद्विषोऽजैषीद्भास्वानिव तमोभरम् ।
अध्वंसत रविर्ध्वान्तं विजयी विद्विषो यथा ॥

लुलितालकवल्लीभिर्भासते भामिनीमुखम् ।
लुलल्लीनालिमालाभिर्नलिनी नलिनं यथा ॥
प्रफुल्लं पद्मिनीपद्मं प्रेङ्खत्षट्पदपङ्क्तिभिः ।
कान्तामुखमिवाभाति विलोलालकवल्लिभिः ॥

इत्यादि ।

उपमावाचकानां विपर्ययाद्यथा—

मुखं भाति यथाम्भोजं भात्यम्बुजमिवाननम् ।
अम्भोजं वा मुखं भाति मुखं पद्मनिभं बभौ ॥
स्मिताम्भोजवद्वद्वक्त्रं स्मितपद्मद्विषन्मुखम् ।
मुखं पद्मप्रतिच्छन्दं मुखं स्मितसरोजवत् ॥
मुखं कमलकल्पं तत्पद्मदेश्यं प्रियाननम् ।
पद्मदेशीयमास्यं ते भाति पद्ममुखी प्रिया ॥
पद्मेन स्पर्धते वक्त्रं पद्मं जयति ते मुखम् ।
मुखमम्भोरुहं द्वेष्टि मुखं पद्मानुकारकृत् ॥
मित्रीयति मुखं चन्द्रः पद्मीयत्यनिलो मुखे ।
पङ्केरुहायते वक्त्रं पङ्केरुहति तन्मुखम् ॥
आननं तव पूर्णेन्दुदर्शं पश्यामि कामिनि ।

पूर्णेन्दोरिव दर्शनं पूर्वं कर्मणि चोपमाने णम् । पूर्णेन्दुमिव दृष्ट्वेत्यर्थः ।

मुखं पूर्णेन्दुविद्योतं द्युदति द्योतते तव ।।

पूर्णेन्दुनेव विद्योतनं पूर्वं कर्त्तरि च णम्, यथा पूर्णेन्दुना द्योत्यते तथा द्योत्यत इत्यर्थः ।

धर्म्माणां विपर्ययाद्यथा—

कलाभिः सकलाभिः स पूर्णेन्दुरिव भासते ।
स मुदं सुहृदामिन्दुः कुमुदानामिवाकरोत् ॥
स चकार चकोराणामिवेन्दुर्मुदमर्थिनाम् ।
भूमीन्द्रोऽभूषयद् भूमिं तमीमिव तमीपतिः ॥

**तोष्यभेद्याधाराधेयभेदभिन्ना तथोपमा ॥ ३९ ॥**

तोष्यभेदा यथा—

स सखीन् तोषयामास चक्रानिव दिवाकरः ।
स द्विषः शोषयामास पङ्कानिव पतिस्त्विषाम् ॥
अशोभिष्ट स भूपृष्ठे नभसीव नभोमणिः ।
कलानां निलयः सोऽभूद्भासां भासां विधुर्यथा ॥

तोष्यादिप्रपञ्चनं रूपकाभ्यासे करिष्यते । एवं लुप्तोपमा—मालोपमा—रसनोपमा—उत्पाद्योपमा—कल्पितोपमा ज्ञेयाः ॥

**उपमेयोपमाद्यास्तु यथालक्षणमभ्यसेत् ।**

उपमायां हि सिद्धायां बह्वलङ्कारसिद्धयः ॥ ३६ ॥

तथाहि—

उपमैव विनेवादि रूपकं वदनं विधुः ।
इयमेकस्योपमानोपमेयत्वे त्वनन्वयः ॥ ३७ ॥
मुखं मुखमिवेयं तु स्मरणं स्मृतियोगतः ।
प्रियामुखं च सस्मार प्रियः पूर्णेन्दुदर्शनात् ॥ ३८ ॥
ससन्देहस्तु किंयोगे किं मुखं किं सुधाकरः ।
इदं नेदं किन्त्वादिकयोगतोऽपन्हुतिर्मता ॥ ३९ ॥
नेदं मुखं शशी किन्तु स्युरपन्हुतिवाचकाः ।
छलाकृतिशरीरार्थमुख्याः शब्दा यथा तथा ॥ ४० ॥
त्रिमार्गामिषतो व्याप्तस्त्वत्कीर्तिर्जगतां त्रयम् ।
इयं भेदे द्वयोर्व्यतिरेको मुखं शशी समौ ॥ ४१ ॥
आद्यं निर्लाञ्छनमियं प्रतिपत्तुर्भ्रमे भवेत् ।
भ्रान्तिमान् पीडितश्चक्रो मुखं प्रेक्ष्य शशिभ्रमात् ॥ ४२ ॥
एवं भवन्त्युपमाया बहुरूपाः प्रवृत्तयः ।
अन्तस्थरूपकोत्प्रेक्षाप्युपमोपक्रमाद्भवेत् ॥ ४३ ॥

यथा—

पल्लवैर्नवरागेव सकटाक्षेव षट्पदैः ।
हस तीवस्मितैः पुष्पैर्वसन्तागमने वनी ॥ ४४ ॥
उत्प्रेक्षाद्योतकाः शङ्के मन्ये नूनमिव ध्रुवम् ।
जाने किलाऽऽदयो ज्ञेयाः प्रायेणेयं क्रियोद्भवा ॥ ४५ ॥

क्रियाप्रपञ्चनं क्रियास्तबकतो ज्ञेयम् । उपमारूपकयोरनेकालङ्कारबीजत्वादुपमा पूर्वं प्रपञ्चिता ॥

रूपकं प्रपञ्च्यते, यथा रूपकं चतुर्द्धा भवति—भेद्यम्, तोष्यम्, आधारः, आधेयम् ।

वनाद्भवे भवेद् भेद्यं रूपकं तोष्यमम्बुदे ।
भुव्याधारस्तथाऽऽधेयं सिंहे वर्ण्यविशेषतः ॥ ४६ ॥

वनादिति पदं द्वे अम्बुदे भुवि सिंहे च योज्यम् ॥

भेद्यं रूपकं यथा—

ध्वान्ताहिविषनागाब्धिशैलवृक्षघनाग्नयः ।
रक्षःपङ्कादयो भेद्या रूपकोक्त्यारिरूपकैः ॥ ४७ ॥

यथा ध्वान्ते रविचन्द्ररत्नदीपकाः, सर्पाणां गरुडनकुलमयूरजाङ्गुलीमन्त्रवादिनः, विषस्य नीलकण्ठामृते, हस्तिनां सिंहाङ्कुशवार्यालानस्तम्भादिकाः, समुद्रस्याऽगस्त्य-प्रलयानलवाडवपरशुरामाग्नेयबाणतरीसेतुहनूमन्मन्दरादयः, गिरीणां वज्रम्, वृक्षस्य लतायाश्च दवानलवायुनदीरयहस्तिविद्युत्पातकुठाराः, मेघस्य वातवर्षात्ययौ, अग्नेर्जलमेघौ रक्षसां रामकृष्णौ, पङ्कस्य शरदागमादित्यतापजलानि, आदिशब्दाद्रवेः राहुमेघागम-

हेमन्तकालदिनात्ययाः, चन्द्रस्य राहुश्यामपक्षप्रतिपत्प्रभातरविदिनमेघाः, प्रदीपस्य बात्यासर्पदर्शनस्नेहत्रुटिदशाक्षयफूत्कृतिमरुद्धस्राञ्चलानिलाः, नदीप्रवाहस्य ग्रीष्मातपः, महिषासुरस्य चण्डी, गजासुरत्रिपुरान्धककामदक्षाऽध्वरादीनां शिवः, मधुदैत्यचाणूरपूतनाकैटभकंसकेशिमुरराहुहिरण्यकशिपुबाणकालियाहिनरकबलिशिशुपालसाल्वगरुडादीनां विष्णुः, प्रलम्बासुरयमुनाजलादीनां बलदेवः, मृगस्य सिंहव्याघ्रौ, मत्स्यमकरादीनां कैवर्तः, वातापिनोऽगस्तिः, रात्रेः प्रभातम्, घूकतारेन्दुदीपौषधीचौरकुमुदचकोरावश्यायजलादीनां रविः, कमलचक्रवाकतमसां चन्द्रः, तूलस्य पवनः, घर्मस्य व्यजनं वायुः, वायुदुग्धदीपमण्डूकादीनां सर्पः, विन्ध्यस्याऽगस्त्यः, पद्मस्य हिमवर्षागजाः, हंसानां मेघः, आतपस्य जलदः, अन्धकारस्य रविः, रवेः राहुः, राहोर्विष्णुः, पङ्कस्यातपः, जलस्य वातः, वातस्य सर्पः, सर्पस्य गरुडः, गरुडस्य विष्णुः, वल्ल्या गजः, गजस्य सिंहः, सिंहस्य शरभः, शरभस्य जलदो हन्ता ॥

तोष्यं यथा—

वनपद्माब्धिचक्राङ्गचक्रचातकषट्पदाः ।
पिककेकिमुखास्तोष्या रूपके मित्ररूपकैः ॥ ४८ ॥

वनानां मेघवसन्तागमकुल्यौषधीशशकारामिकाः, पद्मस्यादित्यशरद्वसन्ताः, समुद्रस्य चन्द्रग्रीष्मौ, हंसादीनां शरदागमः, चक्रवाकादीनां रविः, चातकानां मेघः, षट्पदानां पद्मं, कोकिलानां वसन्तः, मयूराणां मेघाः, मुखशब्दात् चकोरजननेत्रचन्द्रकान्तानां चन्द्रः, घूकताराचौरकुलटौषधिरक्षसां तमस्विनी, सूर्यकान्तदिनकमलिनीनां रविः ॥

आधाररूपकं यथा—

स्वगुणैर्भूनभोऽम्भोधिनदीवननगादयः ।
रूपकस्थैः स्युराधाराः—

वनपर्वतादीनां भूराधारः, यथा-गुणकाननभूर्नृपः । तारारविचन्द्रादीनां नभः, यथा-गुणतारानभोदेशः । लक्ष्मीरत्नसुधाफेनविष्णुमत्स्यकल्लोलविद्रुममुक्तामकरादीनां समुद्रः, यथा-सद्गुणश्रीमहोदधिः, गुणरत्नाम्बुधिर्नृप इत्यादि । कमलहंसचक्रवाकादीनां नदी, यथा-गुणाम्भोजमरुत्कुल्या, यशोहंससरोवरम् इत्यादि । द्रुमपर्वतमृगसिंहादीनां वनम्, यथा-गुणद्रुमवनं नृपः, मानपर्वतकाननमित्यादि । रत्नवंशनदीसिंहद्रुमादीनां गिरिः, यथा-गुणमाणिक्यरोहणः, कीर्तिगङ्गाहिमाचलः । आदिशब्दाद्गङ्गादेवदारुकस्तूरिकाहिमचमरीमुख्यानां हिमाद्रिः, गजानां नर्मदाया विन्ध्यः, चन्दनदक्षिणानिलानां मलयाद्रिः, मुक्तानां ताम्रपर्णी, रत्नानां रोहणाद्रिः, देवकल्पद्रुममन्दारपारिजातकहरिचन्दनसन्तानकनन्दनवनचिन्तामणिकामधेन्वैरावणस्वर्णतारादीनां मेरुपर्वतः, अलकामानसशिवगौरीमुख्यानां कैलास आधारः । किञ्जल्कभृङ्गयोः पद्मम्, पिकभृङ्गयोः सहकारः, कुसुमपल्लवशाखाफलच्छायापक्षिलतादीनां द्रुमः, देवकल्पद्रुममन्दारपारिजातकहरिचन्दनसन्तानकादीनां स्वर्गः, शेषकूर्मपन्नगविषसुधाकुण्डदानवहाटकेश्वरपातालगङ्गातमःप्रभृतीनां पातालम्, कलशपताकादण्डदेवादीनां चैत्यम्, वेदवाणीहंसादीनां ब्रह्मा, गरुडलक्ष्मीपाञ्चजन्यकौस्तुभादीनां विष्णुः, गौरीगङ्गाचन्द्रकलादीनां महेश्वरः, प्रताप-

द्युतिमुख्यानां रविः, कलाचन्द्रिकासुधादीनां चन्द्रः । अमुना प्रकारेण स्वस्वगुणैः सर्वे पदार्था आधारा भवन्ति ॥

रामाद्याः केवलैः क्वचित् ॥ ४२ ॥

रामप्रमुखाः स्वगुणैः केवलैर्न्यायप्रमुखैराधाराः, रूपकं भवति । यथा—न्याये रामः । सन्धायां चाणक्यः । अहङ्कारे रावणः, दुर्योधनश्च । शौर्ये रामसिंहौ । साहसे विक्रमादित्यजीमूतवाहनौ । महसि मार्तण्डः । धीरत्वे रामः । शक्तौ कार्त्तिकेयः । श्रियां विष्णुः । विद्यायां भारतीबृहस्पतिशुक्राः । दाने कर्णशिबिबलिकल्पद्रुमकामधेनुचिन्तामणयः । शरणे शिबिवज्रायुधजीमूतवाहनाः । वाण्यां वाल्मीकिः । शमे रामः । कलासु चन्द्रः । माने युधिष्ठिरहरिश्चन्द्रौ । औचित्ये गुरुः । भक्तौ लक्ष्मणः । स्थैर्ये मेरुः । विवेके बृहस्पतिः । कीर्तौ रामः । विनये लक्ष्मणः । प्रज्ञायां गुरुः । प्रतिष्ठायामिन्द्रः । दयायां युधिष्ठिरः, जिनेन्द्रश्च । आज्ञायां लङ्केश्वरः । लावण्ये समुद्रः । सौहार्दे सुग्रीवः । गाम्भीर्ये समुद्रः । सौभाग्ये कामः । शोभायामिन्द्रः । उद्यमे रामः । गतौ हंसगजवृषभाः । स्वरे पिकवीणाहंसकेकिमधुकराः । रूपे कामनलकूबराश्विनेयकुमारपुरूरवोनकुलाः । शमे मुनिः । ब्रह्मव्रते गाङ्गेयस्कन्दशुकहनुमन्नारदाः । ज्योतिषे वराहमिहिरसहदेवौ । गणिते श्रीधरार्यः । नाट्यवेदे भरताचार्यः । गीते तुम्बुरुकिन्नराप्सरसः । नृत्ये हरः । वाद्ये नन्दी । कवितायां वाल्मीकिव्यासकालिदासाद्याः । वैद्यके धन्वन्तरिः । विषनिग्रहे पीहुलिः । दोषनिग्रहे हनूमान् । लक्षणे पाणिनिः । तर्के दिङ्नागधर्मकीर्त्युद्योतनकरादयः । छन्दसि पिङ्गलाचार्यः । अश्वहृदयज्ञाने, रसवत्यां च नलः । कामशास्त्रे वात्स्यायनः । नीतिशास्त्रे चाणक्यः । पुरुषस्त्रीलक्षणे समुद्रः । वेदे ब्रह्मा । रसवादे व्याडिनागार्जुनौ । धारावेधे अर्जुनः । धनुषि पिनाकी । वज्रे इन्द्रः । चक्रे विष्णुः । गदायां भीमः । पाशे वरुणः । दण्डे यमः । शक्तौ कार्तिकेयः । चन्द्रहासे रावणः । लाङ्गले बलभद्रः । परशौ परशुरामः । वास्तुशास्त्रे विश्वकर्मा । मल्लविद्यायां चाणूरमल्लः । छुरिविद्यायां वेतालभृगू । मायायां विष्णुः । धूर्त्तत्वे मूलदेवः । परोपकारे जीमूतवाहनः ।

अथ दोषः—कुचङ्क्रमणे उष्ट्रखरशृगालाः । कुचरे उष्ट्रमार्जारखरघरट्टकाकघूकटिट्टिभाः । कायकृशत्वे वेतालभृङ्गिरिटी । क्रौर्ये मार्जारः । दम्भे बकः । नीचगमने नदी । चापल्ये मर्कटः । कोपे सर्पः । भीरुत्वे शृगालः । तुच्छत्वे हस्तजलम् । मानादिषु दुर्योधनादीनामुदाहरणम् ।

मानै दुर्योधनो, न्याये रामः, सत्त्वे युधिष्ठिरः, ।
आज्ञायां लङ्केशः, शक्तौ कार्तिकेयो धराधवः ॥
वाक्चातुर्ये सुराचार्यो, गम्भीरत्वे सरित्पतिः, ।
मेरुर्धैर्ये, हरिः शौर्ये, प्रतापे तपनो नृपः ॥

अथवा एभिः सन्धादिकैर्गुणैः सन्धादिगुणवन्तश्चाणक्यादयो जीयन्ते । यथा—

सन्धानिर्जितचाणक्यो माननिर्जितरावणः ।

प्रतापजितमार्तण्डो राजते पृथिवीपतिः ॥

आधेयं रूपकं यथा—

सिंहरत्नसरोऽम्भोजचन्द्रोदित्यद्रुमादयः ।
स्वाधारै रूपकप्रोक्तैः

वनपर्वतगुहादीनां सिंह आधेयम् , यथा-कुलकाननसिंहोऽयम्—इत्यादिकं ज्ञेयम् । समुद्रताम्रपर्णीरोहणाद्रिप्रभृतीनां रत्नमाधेयम् , यथा-कुलाम्भोनिधिमाणिक्यम् । भूपर्वतारण्यादीनां सर आधेयम् , यथा- भवारण्ये सुधासरः ।

वंशपर्वतपीयूषसरोवरमयं नृपः ।
भूरि स्फुरति संसारमरुभूरिसुधारसः ॥ इत्यादि ।

नदीसरःप्रभृतीनां जलस्थानानामम्भोजमाधेयम् नीतिस्रोतस्विनीपद्मम् , राजा राज्यसरोऽम्बुजम् इत्यादि । नभोब्धिशिवभालानां चन्द्र आधेयम् , यथा-कुलाकाशे निशानाथो, ज्ञानाब्धौ हिमदीधितिः । इत्यादि । आकाशस्य रविराधेयम् । महीपालकुलाकाशप्रकाशनदिनेश्वरः, इत्यादि । धराद्रिवनादीनां वृक्ष आधेयम् , यथा-संसारभूमिकल्पद्रुः, कुलाद्रौ देवपादपः, राज्यारामरसालद्रुः-इत्यादि ॥

आधेयं केवलैः क्वचित् ॥ ५० ॥

मौलेः किरीटमाल्यमाणिक्यतिलकादय आधेयम् । अत्र केवलेन मौलिना रूपकरहितेन आधेयं कोटीरादि रूपकं भवति । यथा-भूपालमौलिकोटीरमाल्यमाणिक्यम्-इति, तथा कुलतिलक इति । वृक्षस्य लतायाश्च पत्रपुष्पफलशाखामूलकन्दपक्षिजातिप्रभृतय आधेयम् । पर्वतस्य नदीवृक्षरत्नमृगसिंहपुलिन्दगजकिन्नरादय आधेयम् । नद्याः पद्मभ्रमरहंसचक्रवाकमत्स्यादय आधेयम् । समुद्रस्य चन्द्रसुधावडबाग्निरत्नशङ्खश्रीमुक्तातरङ्गश्रीमत्स्यविद्रुमफेनविष्णुविषादय आधेचम् । चन्द्रस्य ज्योत्स्नाकलाकलङ्कादय आधेयम् । आदित्यस्य तापकिरणादि आधेयम् । आकाशस्य चन्द्रार्कताराग‌ङ्गाप्रभृतय आधेयम् । पातालस्य गङ्गानागदैत्यहट्टकेश्वरतमःसुधाकुण्डादय आधेयम् । स्वर्गस्य देवेन्द्रविमानकल्पद्रुनन्दनवनगङ्गामन्दारपारिजातकहरिचन्दनसन्तानकादय आधेयम् । मेरोर्देवस्वर्गकामधेनुचिन्तामणिमन्दारप्रभृतय आधेयम् । कामिन्याः सीमन्तकुङ्कुमस्तबलकलीलाकमलादर्शकुण्डलकङ्कणकेयूरहारमञ्जीरस्मितकटाक्षधम्मिल्लवेणीकुचमुखकरचक्षुर्नासादय आधेयम् । वनस्य सरसीवापिकाहंसचक्रवाकवृक्षपर्वतभ्रमरगजसिंहसहकारादिवृक्षपुष्पस्तबकपुलिन्दकतस्करमृगादय आधेयम् । गजस्य आदर्शसिन्दूरभूषणाङ्कुशवरत्रागुडिकोष्टक पताकायोधमुखपटकरङ्कुकुम्भस्थलदन्तकर्णपादादय आधेयम् । मण्डपस्य कुम्भलतास्तम्भचन्द्रोदयचन्दनमालामुक्तावचूलपुष्पप्रकरादय आधेयम् । विन्ध्यस्य गजनर्मदादय आधेयम् । हिमाचलस्य गङ्गाहिमकस्तूरिकामृगदेवदारुकिन्नरौषधिचामरप्रभृतय आधेयम् । मलयाद्रेश्चन्दनदक्षिणानिलादय आधेयम् । रोहणस्य रत्नाद्याधेयम् । कैलासस्य शिवगौरीमानसधनदादय आधेयम् । गृहस्य स्तम्भकपाटद्वारादय आधेयम् ॥

अथाऽऽरोपार्हा गुणाः—

सन्धाहंकृतिशौर्यसाहसमतो धीरत्वशक्तिश्रियो
विद्यादानशरण्यवाक्शमकलासत्यौचितोभक्तयः ।
न्यायस्थैर्यविवेककीर्तिविनयप्रज्ञाप्रतिष्ठादया—
ज्ञालावण्यसुहृद्गभीरगुरुतासौभाग्यशोभोद्यमाः ॥५१॥
विचाराचारसन्तोषज्ञानधर्मनयक्षमाः ।
सौजन्यौदार्यवैराग्यब्रह्मचर्यगुणार्जवाः ॥ ५२ ॥
उपकारेन्द्रियारण्यस्त्रीविरतित्यागसंयमाः ।
सौम्यमार्दवशौचत्वसत्वानि विषयोजनम् ॥ ५३ ॥

एते सन्धादयो गुणा राजादेर्यथौचित्यं वर्ण्यन्ते ॥

अथ दोषाः—

मायाभीदम्भदुष्कर्मलोभशोकमदक्रुधः ।
रागसंसारदौर्जन्यप्रमादाज्ञानमन्मथाः ॥ ५४ ॥

एते मायादिका दोषा नीचजनस्य भेद्यरूपकेन उत्तमस्था अपि औचित्येन स्थाप्यन्ते । पूर्वोक्ताः सन्धादिका गुणा अपि वैपरीत्येन दोषा भवन्ति ॥

अथ रोप्याः शब्दाः पुन्नपुंसकलिङ्गपदार्थाः—

चैत्याङ्गवृक्षगजमेघमृगाङ्कभाजं
व्योमाग्निसिन्धुहरिदीपकरत्नकुम्भाः ।
चक्राङ्गचातकचकोरमयूरचक्र-
पुंस्कोकिला वनसरोऽम्बुजमन्दिराणि ॥५५॥

अथ स्त्रीलिङ्गशब्दा रोप्यार्हाः—

ज्योत्स्ना नदी विधुकला सरसी पताका
वल्ली वनी कमलिनी दयिता सुधा श्रीः ।
कादम्बिनी सुरभिवृष्टिसुरात्रिमुक्ता-
ताराकरेणुकलिकालहरीकदल्यः ॥ ५६ ॥

एतैः काव्यद्वयपदार्थैरन्यैरपि पूर्वोक्तसन्धाहंकृत्यादिकाव्यचतुष्टयोक्ता अन्येऽपि गुणा दोषाश्च नपुंसका नपुंसकैः, पुंल्लिङ्गाः पुंल्लिङ्गैः, स्त्रीलिङ्गैः स्त्रीलिङ्गाः यथौचित्यं भेद्यादि-रूपकचतुष्टयविधिना योज्याः । भेद्यं यथा—कोपपावकपर्जन्यः । तोष्यं यथा—विवेकाम्भोजभास्करः । आधारो यथा—गुणरत्नपयोराशिः । आधेयं यथा—गुणाकरनिशाकरः ।

नपुंसकलिङ्गपुंल्लिङ्गशब्दाः शौर्यशमादयः स्त्रीलिङ्गा रोप्यार्हा भवन्ति । यथा—

शौर्यलक्ष्मीलताभेद्यः श्रमश्रीकौमुदीविधुः ।
महःशोभाब्जिनीसूर्यो दानस्थितिसुधाम्बुधिः ॥

स्त्रीलिङ्गशब्दाः सन्धाहंकृतिप्रभृतयः पुरःस्थितैः प्रपञ्चविस्तारप्रसरप्रायशब्दैर्नपुंसक-

लिङ्गा रोप्यार्हा भवन्ति । यथा—

सन्धाविस्तारपाथोधिर्विधुरेष क्षमापतिः ।
विद्याप्रसरवृक्षाब्दः प्रज्ञोत्कर्षनभोरविः ॥

एतच्चतुर्विधानामपि द्विपङ्क्तिरूपकं भवति । प्रथमं भेद्यं द्विपङ्क्तिरूपकं यथा—

प्रतिज्ञावाहिनीपूरपरिप्लुतरिपुद्रुमः ।

इदमपि रूपकं वैपरीत्येन यथा—

द्वेषिवृक्षपरिप्लाविप्रतिज्ञावाहिनीरयः ॥
प्रतिज्ञाचन्द्रिकापूरम्लानवैरिमुखाम्बुजः ।
द्वेषिवक्त्राम्बुजद्रोहिप्रतिज्ञाचन्द्रिकारयः ॥
शौर्यदावानलप्लुष्टद्वेषिकीर्तिलतादवः ।
द्वेषिकीर्तिलताद्रोहिशौर्यदावहुताशनः ॥
धैर्यसूर्यपरिम्लानवैरिकैरवकाननः ।
वैरिकैरवकान्तारग्लानिकृद्धैर्यभास्करः ॥
शमस्रोतस्विनीपूरशान्तक्रोधहुताशनः ।
क्रोधदावानलच्छेदिश्रमस्रोतस्विनीरयः ॥
कलाकादम्बिनीशान्तद्विषत्तेजोहुताशनः ।
द्विषत्तेजोदवच्छेदिकलाकादम्बिनीभरः ॥
विद्यास्रोतस्विनीवाहभिन्नवादिमहीरुहः ।
वादिभूरुहविद्रोहिविद्याकूलङ्कषारयः ॥

अथ द्विपङ्क्तिस्तोष्यरूपकं यथा—

कलाकमलिनीबोधशमवासरनायकः ।

इदमपि वैपरीत्येन यथा—

शमभास्करविस्मेरकलाकमलिनीवनः ॥
कालाकादम्बिनीलीलावृत्त्यर्जुनमनःशिखी ।
जनस्वान्तशिखिक्रीडाकलाकादम्बिनीभरः ॥
उल्लासिसत्यजीमूतप्रीतविष्टपचातकः ।
लोलचातकसंप्रीतिकरसत्यपयोधरः ॥
विवेकरजनीनाथसंवर्धितशमाम्बुधिः ।
शमसागरविस्तारविवेकरजनीकरः ॥

अथ द्विपङ्क्त्याधाररूपकं यथा—

गुणहंसमनोहारिप्रतिज्ञावाहिनीरयः ।
कीर्तिध्वजाञ्चलभ्राजिमानमत्तमतङ्गजः ॥
यशोमौक्तिकविस्तारितारदानपयोनिधिः ।
सत्कीर्तिनर्मदाभ्राजिधैर्यविन्ध्यमहीधरः ।

प्रतापतपनोद्द्योतिगुरुशौर्यनभोङ्गणः ।
विक्रीडत्कीर्तिशीतांशोः तारदानपयोनिधिः ॥
देवभक्तिमरुत्कुल्यापूर्णमानससागरः ।
धैर्यहर्यक्षवर्यश्रीविलसद्गुणकाननः ॥
गुणमुक्ताङ्गणश्रेष्ठविवेकतटिनीपतिः ।
कलाप्रसरनदीरम्यस्फारधैर्यहिमाचलः ॥

इदमेव द्विपङ्क्त्याधाररूपकं वैपरीत्येन द्विपङ्क्त्याधेयरूपकं भवति । यथा—

प्रतिज्ञावाहिनीपूरक्रीडद्गुणसितच्छदः ।
अहङ्कारमहाहस्तिक्रीडत्कीर्तिध्वजाञ्चलः ॥
दानपाथोनिधिक्रीडद्यशोमुक्तासमुच्चयः ।
धैर्यविन्ध्याचलोत्सङ्गरङ्गत्सत्कीर्तिनर्मदः ॥
गुरुशौर्याम्बरक्रोडक्रीडत्तेजोदिवाकरः ।
दानरत्नाकरक्रोडविक्रीडत्कीर्तिचन्द्रमाः ॥
स्वान्ताम्बुधिविशद्देवभक्तिदेवनदीरयः ।
गुणकाननविक्रीडत्तारधैर्यमृगाधिपः ॥
विवेकाम्बुधिविक्रीडद्गुणमुक्तासमुच्चयः ।
धैर्यशैलपरिक्रीडत्कीर्तिगङ्गारयो नृपः ॥

अथ त्रिपङ्क्तिमिश्ररूपकम् । यथा—

सन्धासिन्धुयशोऽम्भोजक्रीडद्गुणसितच्छदः ।

इदं वैपरीत्येन—

गुणहंसमनोहारिसन्धासिन्धुयशोऽम्बुजः ॥
शौर्यशैलमहोदावदग्धवैरिमहीरुहः ।
वैरिभूरुहविद्रोहिशौर्यशैलमहानलः ॥
कलावल्लीयशःपुष्पक्रीडद्गुणमधुव्रतः ।
गुणद्विरेफरोचिष्णुकलावल्लीयशःशमः ॥
शमसिन्धुयशोनीरक्रोडद्गुणसरोरुहः ।
गुणपङ्केरुहभ्राजिशमसिन्धुयशोजलः ॥
सदौचितीलताकीर्तिः पुष्पोद्यद्गुणषट्पदः ।
गुणभृङ्गभृतौचित्यवृक्षकीर्तिप्रसूनकः ॥

अथ रूपकनिर्वाहविधिः । यथा—

प्रतिज्ञाचन्द्रिकाचन्द्रः शोभते भूमिवल्लभः ।
यदालोकनमात्रेण म्लानं वैरिमुखाम्बुजैः ॥
मानमातङ्गविन्ध्याद्रिरेष क्ष्मापालपुङ्गवः ।
कीर्तिर्विजृम्भते यस्य नर्मदाशर्मदायिनी ॥

औचित्यद्रुमकान्तारं भूमिपालो विराजते ।
शौर्यसिंहपरिक्रीडाध्वस्तवैरिमतङ्गजः ॥
धैर्यदन्तावलक्रीडाविन्ध्यविश्वम्भराधरः ।
सत्कीर्तिनर्मदापूरप्लुतक्षोणीतलो नृपः ॥
कलाकल्लोलिनीशैलः सैष राजा विराजते ।
महोमहौषधिज्वालाजालजीर्णा द्विषत्तमाः ॥

अथ भिन्नरूपकविधिः । यथा—

यद्दानकासारसमुद्भवानि भृशं यशःकैरवमण्डलानि ।
गुणावलीकेसरभासुराणि श्रितान्यहो याचकचञ्चरीकैः ।।
सङ्ग्रामपाथोनिधिसम्भवेन भवद्यशःकैरविणीधवेन ।
लीलापरिस्मेरितदिङ्मुखेन म्लानानि विद्वेषिमुखाम्बुजानि ॥

शेषानलङ्कारान् मत्कृतात् अलङ्कारप्रबोधादवबुध्याऽभ्यसेत् ॥

इति श्रीजिनदत्तसू० काव्यकल्पलतावृत्तौ चतुर्थे अर्थसिद्धिप्रताने-
ऽलङ्काराभ्यासस्तबकः प्रथमः ॥

अथार्थोत्पत्तिप्रकाराः प्रकाश्यन्ते—

**वर्णाकारक्रियाधाराधेयसम्बन्धिबन्धवः ।**
**सम्पर्किद्वेषिमित्राणि पतिपत्नीशसेवकाः ॥ ५७ ॥**
**इन्द्रियानन्दभूत्यादिप्रदं तदपहारि च ।**
**एषामप्यरिमित्रादीत्यादि वर्ण्येऽर्थबीजकम् ॥ ५८ ॥**

सर्वेषामेव वस्तूनामेते वर्णादयो भावा एको द्वौ त्र्यादयो वा निश्चिताः । वर्णः शुक्लादिः, आकारश्चतुरस्रादिः, क्रियाश्चलनादिकाः, अधारो वृक्षादेः पृथिव्यादिः, आधेयं पृथिव्यादेर्वृक्षादि, सम्बन्धिनः पितृपुत्रादयः, बन्धवो भ्रातरः, सम्पर्किणः पार्श्वस्थाः, द्वेषिणो रिपवः, मित्राणि सुहृदः, पतिर्वरयिता, पत्नी भार्या, ईशः स्वामी, सेवका आराधकाः, इन्द्रियानन्दप्रदमेकस्य चक्षुरादेः सर्वेषामिन्द्रियाणां प्रीतिप्रदम् , भूत्यादिप्रदं लक्ष्मीवस्त्रस्थानतेजःप्रभृतिप्रदं, तदपहारि इन्द्रियानन्दापहारकं भूत्याद्यपहारकं च ।

तथा—एषां वर्णादीनामपि यथासंभवं ये रिपवो मित्रादयस्तेऽपि यथा वर्णाकारक्रियाणां सादृश्यादेव वस्त्वन्तराणि द्विषो मित्राणि च ।

तथा—आधारस्य द्विषो मित्राणि, आधेयस्य द्विषो मित्राणि, सम्बन्धिनां द्विषो मित्राणि, बन्धूनां द्विषो मित्राणि, सम्पर्किणां द्विषो मित्राणि, द्वेषिणां द्विषो मित्राणि, पत्युर्द्विषो मित्राणि, पत्न्या द्विषो मित्राणि, स्वामिनां द्विषो मित्राणि, सेवकानां द्विषो मित्राणि, इन्द्रियानन्ददायिनां द्विषो मित्राणि, भूत्याद्यपहारिणां द्विषो मित्राणि ।

आधारादीनामपि सादृश्याद्वस्त्वन्तरैः सह शत्रुत्वं मित्रत्वं च कल्पनीयम् । इत्यादिशब्दाद्वर्ण्यवर्णादिद्वेषिमित्राणां द्वेषिमित्रादि ।

तथा—वर्ण्यस्य शिशिरत्वमुष्णत्वं मधुरत्वं कटुत्वं सुगन्धत्वं सुरूपत्वं मधुरध्वनित्वं सूक्ष्मत्वमित्यादयोऽन्येऽपि भावा वर्ण्यवस्तूनि विविधार्थानामुत्पत्त्यर्थं बीजरूपा जायन्ते । यथा—वर्ण्यो रविस्तस्य पीतो वर्णः, आकारो वृत्तः, क्रियाः प्रकाशनरूपाद्याः, आधारो नभः, आधेयं हस्तकमलादि, सम्बन्धिनो ब्रह्माकाश्यपशनियमुनाद्याः, बन्धवोऽपरे सूर्याः, सम्पर्किणो रथो रथ्याऽरुणवालखिल्यादयः, द्वेषिणो राहुशुक्रशनयो ध्वान्तदैत्याश्च, मित्राणि चन्द्रमङ्गलगुरवः, कमलचक्रकाद्याश्च वा, रविरेव प्रभाकमलिन्योः पतिः, पत्न्यः प्रभाकमलिनीरत्नादेव्यः, ईशः पितामहत्वात् ब्रह्मा, सेवका भाविनः, इन्द्रियानन्दप्रदा मित्राद्याः, शोभाप्रदा दिवसाद्याः, इन्द्रियानन्दहरा विपक्षाद्याः, तथा वर्ण्यस्य रवेर्वर्णस्य द्विषो मित्राणि, सदृग्वर्णानि आकारस्य द्विषो मित्राणि सदृगाकाराणि, मित्रस्य कमलस्य द्विषश्चन्द्राद्याः, मित्राणि चक्राद्याः, सम्पर्किणो हंसाद्याः, आधारो जलम्, आधेयं भृङ्गाद्याः । एवं परस्परमेकैकस्य भावस्य यथासंभवमपरे भावा निरीक्ष्याः । एवं कमलमित्रद्वेषिणश्चन्द्रादेरपि वर्णादीनि विलोक्यानि ॥

वर्णादिकानामेकेन द्वाभ्यां वा त्र्यादिकैरथ ।
सुधीरुत्पादयेदर्थमौचित्याद्वर्ण्यवस्तुनि ॥ ५९ ॥

वर्ण्यवस्तुनो वर्ण्याकारादीनां मध्यादेकेन केनापि काभ्याञ्चिद् द्वाभ्यां वा कैश्चित् त्रिभिश्चतुर्भिः पञ्चभिर्वा भावैरर्थः पूर्णतां नेयः ॥

वर्णाकारक्रियामुख्यैः सदृशं वस्तु वस्तुनि ।
संयोजयेद्यथौचित्यमुपमारूपकादिभिः ॥ ६० ॥

वर्ण्यवस्तुनि शुक्लादौ शुक्लादि, चतुरस्रादौ चतुरस्रादि, कम्पनादौ नर्त्तनादि-इत्यादि सदृशान् भावानुपमया रूपकेण वा अलङ्कारान्तरैर्वा योजयेत् ॥

वर्णादिभिरुपमानीकृतवस्तुप्रथितवर्णमुख्यगुणाः ।
उपमेये सादृश्यात् श्लेषादौचित्यतो योज्याः ॥ ६१ ॥

श्वेतादीनां श्वेतादयः, चतुरस्रादीनां चतुरस्रादयः, आधारपरिवारादीनाम् आधारपरिवारादयः औचित्यादुपमानं क्रियन्ते । उपमानीकृतवस्तुनो वर्णादया गुणाः सादृश्येन श्लेषेण वा उपमेये रोप्यन्ते ॥

एवं वर्णेभ्यस्तत्रापि शुक्लवर्णादर्थोत्पत्तये शुक्लपदार्थोपसङ्ग्रहो यथा—

शुभ्राणि भारतीधर्मशेषेशवरुणेन्दवः ।
चन्द्रप्रभसुविध्याख्यौ जिनेन्द्रौ बलनारदौ ॥ ६१ ॥ ॥
ब्राह्मणानां वर्णो धर्मः पितरश्च कृताच्युतः ।
सत्त्वं कृतयुगं शान्तहास्यवीररसास्तथा ॥ ६२ ॥
शुक्लध्यानं शुक्ललेश्या पुण्यं सिद्धिशिलोशनाः ।
चन्द्रश्चोच्चैःश्रवःशक्रजगज्ज्योत्स्नाशरनाः ॥ ६३ ॥

प्रासादसौधकैलासमन्दारद्रुहिमाद्रयः ।
रम्भागर्भपारिजातलोध्रकङ्कोलपादपाः ॥ ६४ ॥
कार्पासकाशकर्पूरकरम्भो रजतं यशः ।
निर्मोकचीरडिण्डीरचन्दनं हसितं हिमम् ॥ ६५ ॥
दधिभ्रद्गणचूर्णास्थिखटिकास्फटिकाभ्रकाः ।
रेणुः केतकखर्जूर्योः कटाक्षा वासभस्मनी ॥ ६६ ॥
मृणालपलिताम्भोदधारेन्दुकरचामराः ।
हारोर्णनाभतन्तूर्मिस्वर्दण्डेभरदा गुणाः ॥ ६७ ॥
सेराहशर्कराशालिदुग्धगङ्गासुधा जलम् ।
निर्झरः पारदो हंसबककैरवकम्बवः ॥ ६८ ॥
लतागृहं पुण्डरीककपालश्वेतकुम्भकाः ।
छत्रसिंहध्वजश्वेतगुञ्जशुक्तिकपर्दिकाः ॥ ६९ ॥
मुक्ताकुसुमनक्षत्रदन्तस्वेदाम्बुबिन्दवः ।
सूर्येन्दुकान्तकरकसिकताकणसीकराः ॥ ७० ॥
मालतीमल्लिकाकुन्दयूथिकाकुटजादयः ।

एते भारतीप्रभृतयोऽन्येऽपि श्वेतपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते । यथा-वर्ण्या भारती ,तस्या उपमानं गङ्गा, गङ्गायाः शुक्लो वर्णः, परिवारो हंसपद्मादि, आधारो धूर्जटिशिरः, क्रिया पापहारित्वम् । ततो भारती कुन्देन्दुसुन्दरद्युतिः पद्मश्रिया हंससेविता शिवोत्तमाङ्गलालिता गङ्गेव सेवकपापहारिणी जयति ।

यथा—वर्ण्यास्तारकास्तासामुपमानं मुक्तास्तासामाधारोऽब्धिस्ततो नभोम्भोधिमध्ये तारा मुक्ता इव ।

यथा—वर्ण्याः काशास्तेषामुपमानं हास्यं हास्यं च प्रियसङ्गतं भवति, ततो नवहंससमागमे शरद्वध्वा हासप्रकाशा इव काशाः ।

यथा—वर्ण्यं हास्यं तस्योपमानं ज्योत्स्ना तस्या आधारश्चन्द्रस्ततो मुखचन्द्रस्य ज्योत्स्नेव हास्यश्रीः ।

यथा—वर्ण्यं यशस्तस्योपमानं हास्यं हास्यस्य हर्षस्ततो रिपुजयहृष्टस्य नृपखड्गस्य हास्यमिव यशः ।

यथा—वर्ण्यं यशस्तस्योपमानं कर्पूरः कर्पूराधारः समुद्गकः परिवारोऽङ्गारस्ततस्त्रैलोक्योदरसमुद्गके यशः कर्पूरमिव तन्मध्ये नभोऽङ्गारलेशः ।

यथा—वर्ण्यास्तारास्तासामुपमानं पुष्पाणि तेषामाधारो लता ततस्तमोवल्ल्याः पुष्पाणीव ताराः ।

यथा—वर्ण्यानि पुष्पाणि तेषामुपमानं स्वेदबिन्दवस्ते सात्त्विकभावाद्धर्माच्च भवन्ति, ततो दक्षिणानिलस्य स्पर्शाद्भृङ्गस्पर्शाद्वसन्तस्पर्शाद्वा वल्लीनां स्वेदबिन्दव इव पुष्पाणि,

परस्परसंघट्टधर्मादिव रवितापधर्मादिव आत्मवशभृङ्गं परवल्लीगतं दृष्ट्वा कोपादिव वल्लीनां स्वेदबिन्दव इव पुष्पाणि । अथवा पुष्पाणां तारका उपमानं तारकाणामाधार आकाशस्ततो वनाकाशे पुष्पाणि तारका इव । अथवा रवितापत्रस्ताः शीतलवनो- पान्तमाश्रितास्तारा इव पुष्पाणि । अथवा स्मोपकारकरान्धकारभ्रान्त्या श्यामलवन मुपाश्रिस्तारा इव पुष्पाणि ।

यथा—वर्ण्यः प्रासादस्तस्योपमानं हिमाचलस्तस्य परिवारो गङ्गा ततः प्रासादो हिमाचलस्तत्र गङ्गेव पताका ।

यथा—वर्ण्यः प्रासादस्तस्योपमानं धर्मस्ततः प्रासादो धर्मो लोकपातकवैरिणो जित्वा पताकाच्छलान्मौलेरुपरि पटीं चालयति ॥

अथ कृष्णवर्णादर्थोत्पत्तये कृष्णपदार्थोपसङ्ग्रहो यथा—

कृष्णानि केशवः सीरिचीरचन्द्राङ्कराहवः ॥ ७१ ॥
विन्ध्याऽञ्जनाद्रिसुव्रतनेमिनाथौ जिनेश्वरौ ।
धूमकेतुर्महापद्मानन्तनागौ यमासुरौ ॥ ७२ ॥
सर्पराक्षसशन्यश्च शिवकण्ठघनाशनिः ।
कालिः कलिहरिद्वैपायनरामधनञ्जयाः ॥ ७३ ॥
शूद्राणां वर्णो धर्मः पितरश्च तमोगुणाः ॥
काली देवी द्रुपदजा राजपादो विदूरजम् ॥ ७४ ॥
विषाम्बरकुहूशस्त्रागुरुपापतमोनिशाः ।
धूमकज्जलकस्तूरीपङ्का बहुलदुर्दिने ॥ ७५ ॥
मषीमदसुरावार्द्धियमुनासाञ्जनाश्रवः ।
मुद्गमाषतिला मुस्तमरिचे वनशाखिनौ ॥ ७६ ॥
गवलं तालतापिच्छदलेन्दीवरवल्लयः ।
नीली जम्बूफलं गुञ्जामुखाङ्गारौ खलाजिने ॥ ७७ ॥
मारिदुर्वचनालीकखलाः कृत्या कुकीर्तयः ।
मारणध्यानदुर्ध्यानकृष्णलेश्या विपद्व्यथा ॥ ७८ ॥
कूर्मो वराहखट्वाङ्गमहिषाः पिकषट्पदौ ।
गोलाङ्गूलमुखं हस्ती कण्ठश्चटककेकिनोः ॥ ७९ ॥
काकः पिपीलिका दुर्गापतिखण्डनकण्डिकाः ।
मकरः कृष्णसारस्तु भिल्लाश्छाया च गोमयम् ॥ ८० ॥
रामारोमावलीनेत्रपदमश्रूरोममूर्धजाः ।
रसावद्भुतशृङ्गारौ कटाक्षाक्षिकनीनिकाः ॥ ८१ ॥

एतेऽन्येऽपि कृष्णपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते । यथा—वर्ण्या स्त्रीवेणी तस्या उपमानं कृपाणः; कृपाण-

स्याधारो वीरस्तता मदनवीरेण भवनिष्फलीकृतपञ्चशरेण स्त्रीवेणीमिषात् कृपाणदण्ड इव प्रगुणीकृतः ।

वर्ण्यं तमस्तस्योपमानं धूमः, धूमाधारोऽग्निस्ततः सन्ध्यावन्हेर्धूमैरिव तमोभिर्व्याप्ता दिशः ।

वर्ण्यं तमस्तस्योपमानं कज्जलं, कज्जलाधारस्योपमानं धूमः, धूमाधारोऽग्निस्ततः सन्ध्यावन्हेराधारो दीपस्तत औषधीदीपसमुद्भूतैः कज्जलैरिव तमोभिर्मलिना दिशः । अथवा रविवियोगार्तानां दिग्वधूनां साञ्जनाश्रुसलिलानीव तमांसि ।

वर्ण्य इन्दुकलङ्कस्तस्योपमानं नीलपद्मं तस्याधारः सरस्ततो नभोरण्ये सुधारसस्तत्र लाञ्छनच्छलादुत्तंसो नीलोत्पलम् । अथवा यामिनीकामिन्या मुखमिव चन्द्रस्तल्लाञ्छनच्छलादुत्तंसो नीलोत्पलम् । अथवा लाञ्छनस्य पापमुपमानं पापस्य दुष्कृतादुत्पत्तिः, ततो रविवियोगार्त्तपद्मिनीनां लक्ष्मीहरणपातकादिव चन्द्रस्य लाञ्छनच्छलान्मूर्तं पातकमिव दृश्यते । तथा इन्दुकलङ्कस्योपमानं कस्तूरिका तस्या आधारो रूप्यकच्चोलकम् । ततो यामिनीकामिनी स्वमण्डनार्थं चन्द्रस्य कच्चोलको लाञ्छनव्याजात्कस्तूरिकापङ्कमिव प्रगुणीचकार । अथेन्दुलाञ्छनस्य विषमुपमानं तत आत्मानं क्रूरस्वभावेन निर्विण्णं भ्रातृस्वभावस्वीकरणाय लाञ्छनच्छलात्कालकूटं चन्द्रमिव सेवते । अथवा यामिन्याः स्वपतेश्चन्द्रस्य चक्षुर्दोषापनयनार्थं लाञ्छनव्याजात्कज्जलाङ्कः कृत इव ।

वर्ण्यं नीलोत्पलं तस्योपमानं लाञ्छनं ततः कामिनीचन्द्रे नीलोत्पलं लाञ्छनमिव ।

वर्ण्यो धम्मिलस्तस्योपमानं राहुस्ततः कालवशादिव गतवैरः सुमुखीमुखपार्श्वे चन्द्रभ्रमाद्धम्मिल्लच्छलेन राहुरिव समागतः ।

वर्ण्या श्रीकण्ठकण्ठरुचिस्तस्या उपमानं तमस्ततस्त्वं हे प्रभो सर्वेषामपि सामान्यप्रभुस्ततः किमस्मद्वैरिणं चन्द्रं शिरसा धत्स इति विज्ञपयेऽन्धकारमिव कण्ठरुचिच्छलादीश्वरमाश्रितम् । अथवा कण्ठरुचि निजसुतललाटेन्दुमिलनाय जलधिरिव समागतः । अथवा कण्ठरुचिच्छलाद्गङ्गास्पर्धयेव यमुना ईश्वरं समागता ॥

नीलवर्णादर्थोत्पत्तये नीलपदार्थसङ्ग्रहो यथा–

नीलानि बुधकर्कोटौ मल्लिपार्श्वौ जिनेश्वरौ ।
बीभत्सरसवायू च नीलको नीलवानरः ॥ ८२ ॥
शुको नीलोत्पलं दूर्वा प्रियङ्गुदलशैवले ।
वंशाङ्कुरो मरकतेन्द्रनीलौ रविवाजिनः ॥ ८३ ॥
काचो मुद्गस्तथा नीललेश्या बालतृणादयः ॥

एतेऽन्येऽपि नीलपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते यथा–वर्ण्यः पार्श्वजिनस्तस्योपमानं नीलोत्पलं तस्याधारः सरस्ततो यस्य मनःसरसि श्रीः पार्श्वे नीलोत्पलीभवति तस्यलक्ष्मीर्न दूरे ।

वर्ण्या शुकावली तस्या उपमानमिन्द्रनीलमणिमाला, ततः शरदि नभोलक्ष्म्या इन्द्रनीलमणिमालेव शुकावली ॥

रक्तवर्णादर्थोत्पत्तये रक्तपदार्थसङ्ग्रहो यथा-

शोणानि भौमभीमान्धाः शङ्खतत्तकपन्नगाः ॥ ८४ ॥
पद्मप्रभा वास्तुपूज्यौ जिनेन्द्रौ नवभानुमान् ।
त्रेता त्रेता हरिः त्तत्रवर्णधर्मपितृव्रजाः ॥ ८५ ॥
सन्ध्योल्कावन्हयो विद्युत्ताम्रे विद्रुमकुङ्कुमे ।
पद्मरागसुरारक्तचन्दनालक्तकद्रवाः ॥ ८६ ॥
दृगन्ताधरजिह्वासृङ्मांससिन्दूरधातवः ।
हिङ्गुलं मधु रत्नानि स्फुलिङ्गा हस्तिबिन्दवः ॥ ८७ ॥
नखेन्द्रगोपखद्योताः कुक्कुटस्य शिखा तथा ।
चकोरसारसपारावतकोकिलदृष्टयः ॥ ८८ ॥
क्रिबाहो हंसचञ्चवङ्घ्री शुकमर्कटयोर्मुखम् ।
कुसुम्भकिंशुकाशोकजपाबन्धूकपाटलाः ॥ ८९ ॥
पल्लवा दाडिमीपुष्पं बिम्बीकिम्पाकयोः फले ।
गुञ्जा कोकनदं रौद्ररसो रागद्वेष्टिकाः ॥ ९० ॥
ताम्बूलरागो मञ्जिष्ठा वज्रत्ततनखत्तते ।
तेजोलेश्याः पद्मलेश्याः क्रोधः क्रुद्धवपुर्मदः ॥ ९१ ॥
वश्याकर्षणयोर्ध्यानं सपाकफलमण्डली ।

एतेऽन्येऽपि रक्तपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते । यथा—वर्ण्याः किंशुकास्तेषामुपमानं कौसुम्भवासांसि ततो वसन्तप्रियसमागमे वनस्थनिरन्तरस्मेरितकिंशुककुसुमश्रेणिमिषेण करैः कौसुम्भवासांसि परिहितानि ।

वर्ण्या कङ्केलिस्तस्या उपमानमनुरागस्ततो वसन्तानुरक्तया वनलक्ष्म्या कङ्केलिच्छलेन मूर्तोऽनुराग इव प्रकटीचक्रे । अथवा वनश्रियो मुखमण्डनं कुङ्कुमस्तबक इव कङ्केलिः ।

वर्ण्या सन्ध्या तस्या उपमानं वन्हिस्ततः प्राणनाथेऽस्तङ्गते रवौ दिग्वधूभिरनुरागमयोभिः सन्ध्याच्छलेन प्रगुणीकृतो वन्हिरिव । अथवा चक्रवाकहृदयेभ्यो विरहाग्निज्वालाकलाप इव सन्ध्याच्छलेन नभोऽभिव्यापी बभूव ।

वर्ण्या जपा तस्या उपमानं रत्नानि ततः शरत्कालनवलक्ष्म्या जपाकुसुमच्छलेन रत्नानीव प्रदत्तानि ।

वर्ण्यो बालार्कस्तस्योपमानं कुकुटशिखा ततः प्रातः किरणावृतमूर्तिर्नानावर्णवनपक्षतेरुदयगिरिकुकुटस्य शिरःस्थितो रविः शिखाशोभां लभते ॥

पिङ्गलवर्णादर्थोत्पत्तये पिङ्गलवर्णपदार्थसङ्ग्रहो यथा—

पीतानि ब्रह्मसूर्येन्द्रगरुडेश्वरदृग्जटाः ॥ ९२ ॥
पद्मनाभो गुरुर्विष्णोश्चक्रं वीररजोगुणाः ।
गिरिजाऽगस्तिरिन्द्राश्वा द्वापरो द्वापराच्युतः ॥ ९३ ॥

भयानकरसो वैश्यवर्णधर्मपितृव्रताः ।
ऋषभप्रमुखास्तीर्थकराः षोडश वासराः ॥ ९४ ॥
सुराद्रिः काञ्चनं कांस्यं रीतिः किञ्जल्कवल्कले ।
परिव्राजकवस्त्राणि हरितालमनःशिले ॥ ९५ ॥
हरिद्रा रोचना हीरो गन्धकं दीपचम्पके ।
कर्णिकारं सुवर्णाञ्जिरम्भाकेतकशालयः ॥ ९६ ॥
हरयो रथाङ्गनामा वानरः सारिकाक्रमौ ।

एतेऽन्येऽपि पीतपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते । यथा—वर्ण्यो रविस्तस्योपमानं कोकस्तस्याधारः सरस्ततो नभःसरोवरे रविश्चक्रवाक इव ।

वर्ण्याः कोकास्तेषामुपमानं परागस्ततः सरसि स्मेरसरसिजपरागस्तबका इव चक्रवाकाः ।

वर्ण्यः परागस्तस्योपमानं कङ्कुमाम्भस्तदाधारो नारीशरीरं ततः काननलक्ष्म्या वसन्तप्रियागमे परागप्रसरपरिष्वङ्गमिषेण कुङ्कुमलेप इव चक्रे ।

वर्ण्यो रविस्तस्योपमानं गरुडस्तस्य क्रिया सर्पवधस्ततस्तिमिरसर्पाणां गरुड इव रविः ॥

अथ धूसरादिभ्योऽर्थोत्पत्तये धूसरादिपदार्थसङ्ग्रहो यथा—

धूसरा रेणुमण्डूककरभा गृहगोधिका ॥ ९७ ॥
गर्दभो मूषको दुर्गाकाककण्ठकपोतकाः ।
पुलकोऽहिः शिखिपिच्छाऽधोभागः करुणो रसः ॥ ९८ ॥
कपोललेश्योर्णनाभशकुनाः कर्बरी तथा ।

वर्ण्या मण्डूकास्तेषामुपमानं करुणो रसस्तस्याधारो दुःखिनस्ततो वर्षाकाले चलमण्डूकावलिच्छलेन विरहार्त्तानां हृदयेभ्य उद्भ्रान्तः करुणो रस इव ॥

बहुवर्णाः शिखिपिच्छेन्द्रचापश्रीदचित्रकाः ॥ ९९ ॥

वर्ण्यं धनुस्तस्योपमानं शिखिपिच्छं ततस्तस्याधारो गोपवर्णः ततः कृष्णमेघस्य गोपालानां प्रपन्नस्य शिखिपिच्छाभरणमिव इन्द्रधनुः ॥

उत्कर्षमुपमेयस्य परिकल्पयितु सुधीः ।
विशेषणैः परिष्कारमुपमानस्य कल्पयेत् ॥ १०० ॥

उपमेयस्य शोभातिशयख्यापनाय कयाऽपि युक्त्या विशेषणैरलङ्कृतमुपमानं कुर्वीत । यथा—

सुरनिकरकराग्रव्यग्रमन्थानशैलक्षुभिततरलदुग्धाम्भोधिकल्लोलकान्तिः ।
हिमकिरणमरीचिव्यूहविभ्राजमानक्षितिधरपतिचूडाजाह्नवीकल्पकान्तिः ॥
तुहिनगिरितनूजानम्रभूतेशचूडागलितगगनगङ्गाधौतबालेन्दुगौरः ।
गिरिशमुकुटचन्द्रज्योतिरुद्योतमानस्फटिकशिखरचूडास्पर्धमानाङ्गकान्तिः ॥

इति श्वेतवर्णः ।

मुकुटगलितगङ्गानीरकल्लोलमालास्नपितगिरिशकण्ठस्पष्टरुग्देहयष्टिः ।
अभिनवजलवाहव्यूहधाराविशुद्धाञ्जनशिखरिगरीयःशृङ्गचङ्गाङ्गलक्ष्मीः ॥
दिनपरिवृढपुत्रीगर्भनीलारविन्दप्रसृमरमधुपालीपक्षतिप्रख्यकान्तिः ।
जलशयनशरीरस्फाररोचिःप्रपञ्चच्छुरितसलिलराशिभ्राजमानाङ्गयष्टिः ॥

इति कृष्णः ।

मसृणघुसृणपङ्काभ्यङ्गचञ्चच्चलाक्षीकुचकलशपिधानोद्दामकौसुम्भकान्तिः ।
तरुणतरणिकान्तिप्रान्तसंसर्गरङ्गत्कमलदलकदम्बप्रायकायप्रभोर्भिः ॥
अभिनवरविरश्मिद्योतितप्राच्यभूभृच्छिखरलसदशोकस्मेरपुष्पोपमानः ।
पतिकुपितमृगाक्षीलोचनप्रान्तरोचिश्छुरितकमलकर्णोत्तंससङ्काशकान्तिः ॥

इति रक्तः ।

मुररिपुपदनिर्यज्जान्हवीनीरपूरस्नपितगरुडपक्षप्रख्यसंलक्ष्यलक्ष्मीः ।
तरुणकिरणमालिस्फूर्जदंशुप्ररोहः स्मितकनकसरोजव्यूहतुल्याङ्गकान्तिः ॥
जलधरनिकुरम्बोद्दामधारानिपातस्नपितकनकशैलस्पर्द्धिरोचिष्णुकान्तिः ।
तरुणतरमृगाक्षीगण्डरोचिःप्रपञ्चच्छुरितकनककर्णोत्तंससद्वर्ण्यवर्णः ॥

इति पीतवर्णः ।

सदृशं सदृशेनोपमेयम् । यथा—

अमरनिकरयाञ्चाविस्फुरत्कामधेनुस्तनगलितपयोवद्भारती यस्य रेजे ।
हिमकिरणमयूखप्रान्तभिन्नेन्दुकान्तप्रसरदमृततुल्या यस्य वाचो विभान्ति ॥
दनुतनुजविपक्षक्षुब्धदुग्धाब्धिगर्भोल्लसदमृतसमाना रेजिरे यस्य वाचः ।
मदनमथनचूडाचन्द्ररोचिष्णुगङ्गालहरिभरसमाना शोभते यस्य वाणी ॥

एवमन्यदपि ॥

इति श्रीजिनदत्त० अर्थसिद्धिप्रताने चतुर्थे वर्ण्यस्तबको द्वितीयः ॥



अथ आकारेभ्यस्तत्रापि प्रथमं चतुरस्राकारादर्थोत्पत्तये चतुरस्राकारपदार्थसङ्ग्रहो यथा—

**चतुरस्राणि व्यजनं कुम्भिका च पताकिका ।**
**चातुरी मञ्चिका सिंहासनं पार्थिवमण्डलम् ॥ १०१ ॥**

एतेऽन्येऽपि चतुरस्रपदार्थाः परस्परमौचित्यादुपमानं क्रियन्ते । उपमानीकृतपदार्थस्य वर्णादयो गुणा उपमेये रोप्यन्ते । यथा—वर्ण्यं पार्थिवमण्डलं तस्योपमानं सिंहासनं तस्याधेयं राजा ततः सर्वकार्यकरणक्षमस्य मन्त्राधिराजस्य सिंहासनमिव पार्थिवमण्डलम् ॥

प्रलम्बचतुरस्रपदार्थसङ्ग्रहो यथा—

**प्रलम्बचतुरस्राणि खट्वा स्थण्डिलतूलिका ।**
**कपाटपट्टिकापेटापट्टाः प्रालकपुस्तके ॥ १०२ ॥**

इष्टका तिलकं केतुः पटः पाणिः प्रसारितः ।
प्रशस्तिपट्टिका शय्या पट्टः शकटमञ्चकौ ॥ १०३ ॥
गवाक्षसारफलकं कटद्वारपटादयः ।

एतेऽन्येऽपि-इत्यादि। वर्ण्यं पुस्तकं तस्योपमानं मञ्जूषा साऽपि रत्नस्थानं, ततो धृतकाव्यरसा मञ्जूषेव पुस्तिका ।

वर्ण्यं तिलकं तस्योपमानं तूलिका, ततो मदननृपतेर्बालाशरीरसौधोपरि क्रीडायै चतुरस्रमुक्तातिलकच्छलेन विशदप्रभाच्छलोत्तरच्छदा तूलिकेव प्रगुणीकृता ।

वर्ण्या तूलिका तस्या उपमानं चतुरस्रतिलकं, ततो गृहलक्ष्म्याश्चन्दनं तिलकमिव तूलिका ।

वर्ण्यं ललाटफलकं तस्योपमानं प्रशस्तिपट्टिका, ततः कन्दर्पदेवतायतने बालाशरीरे कस्तूरिकापत्रवल्लीमिवाऽक्षरमालिका प्रशस्तिपट्टिकेव ललाटफलकम् ॥

वृत्तपदार्थसङ्ग्रहो यथा—

सम्पूर्णगर्भवृत्तानि मुखपद्मेन्दुदर्पणाः ॥ १०४ ॥
कपोलकुण्डले तालसूर्यभाजनगाब्दिकाः ।
झल्लरी कमठं पुण्ड्रं लूतागृहदलस्फुराः ॥ १०५ ॥
छत्रव्यजनचालिन्यो मृदङ्गपुटपूपकाः ।
घरट्टमण्डकौ कन्दुरालवालः सरो मही ॥ १०६ ॥
द्वीपः शरावः कंसालकरिश्रवणकौशिकाः ।
कुलालरथकृष्णानां चक्राणि शाणयन्त्रकम् ॥ १०७ ॥
तुलावेलाजकैवर्तजालावर्तारघट्टकाः ।

एतेऽन्येऽपीत्यादि । वर्ण्यः सूर्यस्तस्योपमानमादर्शः स स्त्रीपार्श्वे भवति, ततः पूर्वदिङ्नार्या आदर्श इव प्राभातिको रविः । अथवा रवेरुपमानं पुण्ड्रः सोऽपि स्त्रीमुखे भवति, तत पूर्वदिगङ्गनामुखे पद्मरागपुण्ड्रमिव रविः ।

वर्ण्यश्चन्द्रस्तस्योपमानं छत्रं तदपि राज्ञो भवति, ततो मदनभूपतेश्छत्रमिव चन्द्रः । अथवा चन्द्रस्योपमानं स्फुरा सापि सुभटस्य भवति, ततो मदनसुभटस्य स्फुरामण्डलमिव चन्द्रः ॥

गम्भीरमध्यवृत्तानि नाभिस्थालीगुहानदाः ॥ १०८ ॥
कुण्डं वापी श्रुतिः कूपो मुखं गर्भकचोलके ।
कमण्डलुघटग्रीवाचक्रनाभिरुलूखलः ॥ १०९ ॥
कटाहमणिकौ कुण्डी कम्बुः कुतपपङ्कजे ।
चषकं कुम्भभृङ्गारौ श्रीभाजनाप्यमण्डले ॥ ११० ॥
हारका सेनिका पल्ली करण्डो धूपवर्तकः ।
कपालखर्परे तुम्बसमुद्गकरका दृतिः ॥ १११ ॥
घण्टाशिरस्कधत्तूरसुमनोभेरिकाहलाः ।
नालप्रणालनलिकाः शरधिर्धमनी घटी ॥ ११२ ॥

गर्तापिधानं चङ्गेरीकुम्पिकालोकनालयः ।
तिलेक्षुपेषुकृद्यन्त्रे पालकं द्यूतगर्तिका ॥ ११३ ॥

एतेऽन्येऽपीत्यादि । वर्ण्या नाभिः तस्या उपमानं कूपस्ततः स्तनारघट्टोपरि लुलित-रोमालिमालालावण्यजलपूर्णः शृङ्गारवनसेचनाय मदनारामिकेण नाभीरूपः कूप इव प्रगुणीकृतः ।

वर्ण्यानि पद्मानि तेषामुपमानं चषकानि ततो जलदेवतानां मधुपूर्णानि चषका-नीव पद्मानि ॥

पिण्डिताकृतिवृत्तानि गोलस्तबककन्दुकाः ।
कन्देभकुम्भधम्मिल्लनितम्बस्तनमौलयः ॥ ११४ ॥
दूष्यं घण्टिका मुष्ट्यंसकरोटिककुदण्डकाः ।
राहुर्म्रत्तणपिण्डोधःकपिशीर्षघटाः फलम् ॥ ११५ ॥
गुल्मं फालं वयःसाररथाङ्गा हंसजाहकौ ।
मोदकः कलशस्तुम्बकमण्डलुसमुद्गकाः ॥ ११६ ॥
नारङ्गचूतकरुणबिल्वजम्बोरदाडिमाः ।
बीजपूरीनारिकेल्यावित्यादिद्रुफलावलिः ॥ ११७ ॥

एतेऽन्येऽपीत्यादि । वर्ण्यौ स्तनौ तयोरुपमानं कुम्भौ ततः शृङ्गाररसपूर्णौ तटस्थ-निष्पन्दलेखाकृतिरोमावलिरम्यौ मुखस्थितचूचुकच्छलेनेन्द्रनीलपिधानौ नार्याः कुम्भा-विव कुचौ ।

वर्ण्यो वप्रस्तस्योपमानं वलयं तस्याधारो बाहुस्ततो वसुधावध्वा अन्तरोल्लसित-वलयमिव वप्रः । नार्याः शृङ्गारवल्लेश्चूचुकच्छलनिलीनभृङ्गौ कुसुमस्तबकाविव कुचौ । रतिप्रीतिभ्यां कामदेवस्य त्रिभुवनराज्याभिषेकाय चूचुकच्छलमुखस्थिताश्वत्थपल्लवौ कनककुम्भाविव कुचौ ।

वर्ण्यश्चन्द्रस्तस्योपमानं हंसस्ततो नभःकासारे ज्योत्स्नाजलसम्भृते लाञ्छनच्छलेन कलितशैवलवल्लरीपल्लवो हंस इव चन्द्रः ॥

गर्भप्रकाशवृत्तानि घटीमुकुटकण्टिकाः ।
ताडपत्रककटकाङ्गदाः कङ्कणमूर्मिका ॥ ११८ ॥
हस्तसूत्रं नूपुरे द्रुग्रन्तारन्तार्थकरण्डके ।
पुष्पस्रङ्मेखला हारो रुण्डमालाकपर्दकौ ॥ ११९ ॥
कट्याः सूत्रगुणो मौञ्जीजपघर्घरमालिके ।
परिवेषः कुण्डलना प्राकारपरिखावृतिः ॥ १२० ॥
कर्णपाशो बाहुपाशो पालिबाह्यालिवागुराः ।
घटकण्ठः कृष्टचापं चषालव्योममण्डले ॥ १२१ ॥
दिव्यार्थमण्डलश्रोणीकुण्डलीभूतकुण्डली ।
पर्यस्तिका योगपट्टवल्गोपवीतरश्मयः ॥ १२२ ॥

एतेऽन्येऽपीत्यादि । यथा—वर्ण्यो वप्रस्तस्योपमानं कपर्दस्तस्याधारः शिवस्ततो

भुवः शिवमूर्तेः कपिशीर्षमुण्डमालान्वितः कपर्द इव वप्रः ।

वर्ण्यो वप्रस्तस्योपमानं वलयं तस्याधारो राहुस्ततो वसुधावध्वा अन्तरोल्लसितनृपसौधबाहुभासितं वलयमिव वप्रः ।

वर्ण्यौ कर्णपाशौ तयोरुपमानं व्याकृष्टचापे ततो मदनयौवनाभ्यां जननयनमनोमृगवेधाय सन्निहितकटाक्षबाणे कर्णद्वयमिषेण धनुषी इव कुण्डलिते ॥

सूक्ष्मश्वेतानि वृत्तानि मुक्तामलकतारकाः ।
दाडिमीफलबीजानि दन्तबिन्दुवराटकाः ॥ १२३ ॥
करटाब्धिपयोबिन्दुबुद्बुदस्वेदबिन्दवः ।
प्रसूनं पिटकं पीलुफलं जातीफलं कणाः ॥ १२४ ॥

एतेऽन्येऽपीत्यादि । यथा—वर्ण्यास्तारास्तासामुपमानं मुक्तास्ता हि समुद्रे शुक्तितः सम्भवन्ति, ततो ज्योत्स्नाम्भःसम्भृतनभोऽम्भोधौ लाञ्छनच्छलस्फुटितमुखचन्द्रशुक्तिकुहरनिःसृता मुक्ता इव ताराः । अथवा ताराणामुपमानं जलबिन्दवः ते हि जलाशयादिषु सम्भवन्ति, ततोऽनवरतभ्रान्तिश्रान्तस्य रवेः पश्चिमाचलशिखरात् प्रदत्तझम्पावशेन तोयनिधेरुच्छलिता नभसि जलबिन्दव इव ताराः ॥

सूक्ष्मरक्तानि वृत्तानि नखरत्नेभबिन्दवः ।
गुञ्जेन्द्रगोपखद्योताः स्फुलिङ्गकुद्धलोचने ।
पूगशोणाश्मबन्धूकबदरीवटयोः फले ॥ १२५ ॥

एतेऽन्येऽपीत्यादि । यथा—वर्ण्या मणयस्तेषामुपमानं रत्नानि ततो जलधरैर्जलधेः पीतस्फुलिङ्गा इव मणयः ।

वर्ण्या इन्द्रगोपास्तेषामुपमानं रत्नानि ततो जलधरर्जलधेः पीतसरलजलैर्जलैः समं वृष्टै रत्नैरिव इन्द्रगोपैर्भूर्व्यासा ।

वर्ण्याः खद्योतास्तेषामुपमानं वन्हिस्फुलिङ्गास्ततो घनघटासङ्घट्टशतखण्डितविद्युदग्नेः खण्डलवा इव खद्योताः ।

वर्ण्यानि बन्धुजीवानि तेषामुपमानं शोणरत्नानि ततो वनलक्ष्म्याः शरत्कालेन क्लृप्तानि माणिक्याभरणानीव बन्धुजीवकुसुमानि ॥

सूक्ष्मश्यामानि वृत्तानि जम्बूभृङ्गकनीनिकाः ।
चूचुकाः साञ्जनाश्र्वेन्द्रनीलौ गुञ्जाऽतसीसुमे ॥ १२६ ॥

एतेऽन्येऽपीत्यादि । यथा—वर्ण्यानि जम्बूफलानि तेषामुपमानं साञ्जनाश्रुबिन्दवः, ते दुःखात् स्त्रियो भवन्ति, ततः परवल्लीः स्पृशन्तं मारुतकामुकं दृष्ट्वा जम्बूलतया साञ्जनाश्रूणीव मुक्तानि जम्बूफलानि ।

वर्ण्या भ्रमरी तस्या उपमानं कनीनिका सा हि नेत्रे भवति, ततो वसन्तनायकं पश्यन्त्या माधवीलताया विस्मेरकुसुमनेत्रान्तर्भ्रमरी कनीनिकेव निश्चला ।

वर्ण्यौ चूचुकौ तयोरुपमानं भृङ्गौ तावपि कमलाश्रयौ भवतः, ततो रतिप्रीतिक्रीडाकमलयोः कुचयोः कृतास्पदौ भृङ्गाविव चूचुकौ ॥

त्रिकोणान्यथ दम्भोलिशूलेशानदृशौ हलम् ।
सन्ध्यक्षराद्यश्रृङ्गाटौ कामाद्रीवन्हिमण्डले ॥ १२७ ॥
करपत्रनिरङ्गाद्रितलश्रोणिस्थपाणयः ।
क्षुरप्रश्रृङ्गगोक्षुररोहिणीशकटानि च ॥ १२८ ॥

एतेऽन्येऽपीत्यादि । यथा-वर्ण्यं त्रिकोणतिलकं तस्योपमानं रोहिणी, ततो नायिकामुखे त्रिकोणमुक्तातिलकच्छलेन निजपतिभ्रमेण रोहिणीव समागता। अथवा स्मभटेन शिवपराभवादनादृतपुष्पबाणेन बालाया भ्रूधनुः सज्जीकृत्य त्रिकोणतिलकच्छलेन क्षुरप्रायुधमिव प्रगुणीकृतम् । अथवा निरन्तरं जनमनोवेधकारिशरपरम्पराक्षेपश्रमार्तरपनयनायाऽन्तरान्तरा नीरपानमिव कर्तुं नायिकात्रिकोणमुक्तातिलकच्छलात् मदनेन कान्तिजलपूर्णं करपत्रमिव सीमन्तदण्डे लम्बितम् ॥

दीर्घाणि वेणीसीमन्तनासिकाबाहवोऽङ्गुलिः ।
रोमाली पृष्ठवंशोरुजङ्घाऽन्त्रनलिकाः शिराः ॥ १२९ ॥
मौर्वी धनुः शरप्रासकृपाणलकुटार्गलाः ।
आषाढमुशलाऽरित्रयष्टिमन्थानकध्वजाः ॥ १३० ॥
वंशधूपतुलापट्टतालद्रुस्तम्भमेधयः ।
स्तूपकूपयशस्तम्भेन्द्रध्वजार्हत्पुरोध्वजाः ॥ १३१ ॥
स्वर्दण्डच्छत्रदण्डोर्मिनिर्मोकाऽध्वाऽहिनिम्नगाः ।
मृणालं हारशेषस्रग्जटावल्लीद्रुमेक्षवः ॥ १३२ ॥
कुशी प्राजनकं बाहुयुगवेत्रकशा झषः ।
हस्तिहस्तरदौ पुच्छं नाडीश्रृङ्खलकीलकाः ॥ १३३ ॥
दामशैलूकशूलानि करभो नकुलस्तथा ।
जलूकैर्वासकूष्माण्डमृदङ्गा वायुमण्डलम् ॥ १३४ ॥
वर्तनं लेखनी काष्ठकरणं नखभेदनी ।
केतकीदलमञ्जर्यो नाराचार्केन्दुरश्मयः ॥ १३५ ॥

एतेऽन्येऽपीत्यादि । वर्ण्या वेणी तस्या उपमानं सर्पः सोऽपि सुधाकुण्डे भवति, ततस्त्रिनेत्रानलदग्धकुसुमायुधसंजीवनवाक्सुधाकुण्डस्य वदनस्य रक्षाभुजङ्ग इव वेणीदण्डः । अथवा यौवनयज्वना युवतीहृदयकुण्डे सदा दीपितस्य मदनानलस्य निर्गता धूमोर्मिरिव वेणीवल्लरी ।

वर्ण्या रोमाली तस्या उपमानं मृणालं ततः शिवसमरदग्धधनुषः स्मरस्य कृते यौवनेन बालारोमावलीव्याजात् सज्जीकृतो मृणालधनुर्दण्डः ।

वर्ण्या कृपाणलेखा तस्या उपमानं यमुना ततस्त्वदभिहतरणसंमुखनृपतिनिकरैर्निरन्तरं विध्यमानो मम पिता रविर्विधुरत्वं गतः, ततः कियन्तमपि कालं विलम्बस्वेति विज्ञापनायेव कृपाणच्छलाद् यमुना नृपहस्तं गता ॥

वक्त्राण्यलकभालभ्रूनखाङ्काऽङ्घ्रिललाटिकाः ।
कटादेन्द्रधनुर्विद्युदर्धचन्द्रहलाङ्कुशाः ॥ १३६ ॥

कुञ्चिमित्राङ्गुलीतल्पदात्रकन्दुकदण्डका।
तडागपालिकुद्दालतोरणानि सुखासनम् ॥ १३७॥
गोपानसी रथो वंशाः शाकच्छदकखेटके।
चन्दनमालाबालेन्दुकिंशुकेभाङ्गुलीरदाः ॥ १३८ ॥
श्वपुच्छाऽश्वमुखे शृङ्गचञ्चूवृश्चिककण्टकाः।
करिदंष्ट्रा मयुग्रीवा सिंहकुक्कुटयोर्नखाः ॥ १३९ ॥
केसरश्चन्द्रको लग्नकङ्कणं फणभृत्फणाः।
पुरोधःकरकौपीने केकिकुक्कुटमञ्जरी ॥ १४० ॥

एवमन्येऽपीत्यादि। यथा-वर्ण्यो बालेन्दुस्तस्योपमानं दात्रं दात्रेण लवनक्रिया क्रियते, ततो मानिनीमनोभूमिप्ररूढदृढमूलमानलतावितानलवनाय मनोभुवा प्रगुणीकृतं लवित्रमिव बालशशी।

वर्ण्याः किंशुकास्तेषामुपमानं कर्तर्यस्ता हि व्याधस्य भवन्ति, ततो मदनव्याधस्य प्रतिकामिनीजनमनोमृगवधादिव रुधिरार्द्राः कर्तर्य इव किंशुकाः।

वर्ण्या नखाङ्कास्तेषामुपमानं किंशुकानि, ततः कुसुमास्त्रस्य कामिनीवक्षःस्पर्धिचन्द्रबाणाकृतिकिंशुककुसुमश्रेणीव पतितानि नखक्षतानि।

वर्ण्यौ भ्रुवौ तयोरुपमानं मित्राङ्गुल्यौ, ततो बालायाः कामयौवनाभ्यां परस्परमैत्र्याय वक्रीकृतौ मित्राङ्गुल्याविव भ्रुवौ ॥

उच्चभद्रासनं वप्रप्रासादाट्टालकालयाः।
सतां मनोरथा हस्तिहस्तिशालशिलोच्चयाः ॥ १४१ ॥

एतेऽन्येऽपीत्यादि। यथा—वर्ण्यः प्रासादस्तस्योपमानं हिमाद्रिस्ततः प्रासादे हिमाद्रौ गङ्गेव पताका।

वर्ण्यं भद्रासनं तस्योपमानमुदयाद्रिस्ततो भद्रासनोदयाद्रौ राजा रविरिव ॥

इति श्रीजिन० अर्थसिद्धिप्रताने चतुर्थे आकारस्तबकस्तृतीयः ॥

---

अथ क्रियाभ्योऽर्थोत्पत्तिः कथ्यते। यथा—

इष्टप्राप्त्यै रिपूच्छित्त्यै स्पर्धया पूर्वजक्रमात्।
वर्ण्यवस्तुक्रियाभावैः क्वापि श्लेषकृतस्मितैः ॥ १४२ ॥

तावद्वर्ण्यवस्तुनोऽवश्यमेव क्वापि चलनावस्थानजल्पनादिक्रिया भवति, ततस्तस्याः क्रियाया इष्टप्राप्तिः, रिपूच्छित्तिः, स्पर्धा, पूर्वजक्रम—एतानि चत्वारि कारणानि क्वापि श्लेषकृते प्रकाशानि यथौचित्यं योजनीयानि।

इष्टप्राप्तिर्यथा—वर्ण्यो वप्रस्तस्योच्चैर्वर्धनं क्रिया तस्याः कारणं नभोगङ्गास्नानेन पापापनयनमिष्टं तत्प्राप्तिस्ततः परमातङ्गस्पर्शोद्भवं मालिन्यमपनेतुमिव वप्रो नभोगङ्गास्नानार्थमुच्चैस्तरां वर्धते स्म—

वर्ण्यं कमलं तस्य जलवासादि तपःक्रिया तस्याः कारणं कामिनीमुखौपम्येष्ट-

प्राप्तिस्ततः कमलं कामिनीमुखौपम्यप्राप्त्यै जलान्तराकण्ठमग्नं तपः कुरुते ।

वर्ण्यश्चन्द्रस्तस्य शिवशिरःसुरसरित्तीरे निवासः क्रिया तस्याः कारणं कामिनीमुखौपम्येष्टप्राप्तिस्ततः सुमुखीमुखौपम्यप्राप्त्यै स्थाणोः शिरसि स्थायी सुरसरित्तीरे तपस्वी तपःक्षामो निवसति चन्द्रः ।

वर्ण्यं यशस्तस्य स्वर्गगमनं क्रिया तस्याः कारणं निजमित्त्रैरावतादिमिलनेष्टप्राप्तिस्ततो निजमित्त्रैरावतोच्चैःश्रवोब्रह्महंसशिवशिरोगङ्गाविष्णुपाञ्चजन्यादीनां मिलनायेव नृपयशः स्वर्गं जगाम ।

रिपुच्छित्तिर्यथा—वर्ण्योव प्रस्तस्य नभोगमनं क्रिया तस्याः कारणं स्वस्पर्धिमेरुनगाश्रितरविरिपूच्छित्तिस्ततः स्वस्पर्धिमेरोराश्रयणशीलं रविमिव भूमौ पातयितुं वप्रो नभोगमनं करोति ।

वर्ण्या हंसास्तेषां सरःश्रयणं क्रिया ततो निजगतिस्पर्धिनारीवदनमित्त्राणि कमलानीव छेत्तुं सरः श्रयन्ति हंसाः ।

वर्ण्यो रविस्तस्योदयः क्रिया ततो निजसारथिभ्रातृगरुडरिपुसर्पसोदराणीव तमांसि छेत्तुं रविरुदयं करोति ।

अथ स्पर्धा—वर्ण्यो वप्रस्तस्य नभोगमनं क्रिया तस्याः कारणं स्पर्धा ततो विन्ध्यगिरिस्पर्धया तरणिसरणिरोधं कर्तुमना इव वप्रो व्याप्नोति ।

वर्ण्यं यशस्तस्य दिग्व्यापनं क्रिया तस्याः कारणं स्पर्धा ततो निजप्रभावस्पर्धिसुधादीधितिस्पर्धयेव नृपयशो दिक्चक्रमाक्रामति ।

अथ पूर्वजक्रमः—वर्ण्यो वप्रस्तस्य पूर्वजो गिरिस्ततो निजपूर्वजगिरिक्रमेणैव वप्रोऽपि नभो रुरोध ।

वर्ण्या नारीमुखपत्रवल्लीकस्तूरिका तस्याः पूर्वजो मृगस्ततोऽस्मत्पूर्वजमृगश्चन्द्रं श्रित इति पूर्वजक्रमान्मृगनाभिरपि चन्द्रसोदरं सुमुखीमुखं श्रिता ।

एवं वस्तुषु क्रियामारोप्येष्टप्राप्त्यादिकारणानि योजनीयानि ॥

क्रियाभ्योऽर्थान्तरोत्पत्तये प्रकारान्तरमाह—

वर्ण्योऽपन्हुतिवाचकशब्दैरारोपितेषु तुल्येषु ।
रचितोचितक्रियाणामिष्टप्राप्त्यादि कारणं कल्प्यम् ॥ १४३ ॥

वर्ण्यवस्तुष्वपह्नुतिवाचकः शब्दै रूपकोत्प्रेक्षाभ्यां वर्ण्याकारक्रियादिभिः सदृशानि वस्तूनि यथौचित्यं क्रियाः कल्पयेत् । ततः प्रकल्पितक्रियायामिष्टप्राप्त्यादीनि कारणानि योजयेत् । यथा—वर्ण्या नारीनखास्तेषु तुल्यत्वादारोपितास्तारास्तासां पादलगनं क्रिया तस्याः कारणं नारीप्रसादनेष्टप्राप्तिः, ततस्तव मुखस्पर्धापातकेनाऽस्मत्पतिः कलङ्कितः क्षयी नाद्यप्रभृति स्पर्धत इति नार्याः प्रसादनं कर्तुमिव नखमिषेण चन्द्रदारास्तारा: पादयोर्लग्नाः ।

वर्ण्यश्चन्द्रस्तत्तुल्यत्वादारोपितं यशस्तस्य त्रिभुवने भ्रमणं क्रिया तस्याः स्वसमाननिरीक्षणं कारणं ततो मत्समानः कोऽप्यस्ति न वेति निरीक्षितुमिव पीयूषद्युतिच्छलेन नृपयशो भुवनत्रयं भ्रमति ।

वर्ण्या वेणी तस्यां तुल्यत्वादारोपितः सर्पस्तस्य नार्या अनुसरणं क्रिया ततस्तद्वचनस्य सुधया सह मैत्रीमिव कारयितुं सुधाध्यक्षः सर्पो वेणीमिषेण नार्या अनुचरत्वं करोति । अथवा तस्याः कटाक्षवक्रत्वमिव शिक्षयितुं वेणीमिषेण सर्पो नार्या अनुचरत्वं गतः ।

वर्ण्या दशनद्युतिस्तस्यामारोपिता सुधा तस्या रामाश्रयणं क्रिया ततो वचनमाधुर्यमिव शिक्षितुं दशनद्युतिमिषेणाश्रयणं करोति ।

रिपूच्छित्तिर्यथा—वर्ण्य ऐरावणस्तत्रारोपितं यशस्तस्य स्वर्गगङ्गाश्रयणं क्रिया तस्या रिपूच्छित्तिः कारणं ततः स्वस्पर्धिनीं स्वर्गङ्गामिव गाहितुमैरावणच्छलेन नृपयशः स्वर्गङ्गां गतम् ।

वर्ण्यौ कुचौ तयोरारोपितौ चक्रौ तयोः कान्तश्रयणं क्रिया तस्याः कारणं रिपूच्छित्तिः ततो निजवैरिणश्चन्द्रस्य तन्मुखपार्श्वात् पराभवं कारयितुं कुचच्छलेत चक्रौ नारीमाश्रितौ ।

अथ स्पर्धा—वर्ण्या हारमुक्तास्तास्वारोपितास्तारास्तासां नारीसमाश्रयणं क्रिया तस्याः कारणं स्पर्धा ततोऽस्मत्सहोदयेन तमसा वेणीमिषादियमाश्रितेति स्पर्धयेव हारमुक्ताच्छलेन ताराभिः स्त्री समाश्रिता ।

वर्ण्या शिवशिरःसरित् तस्यामारोपिता कीर्तिस्तस्याः शिवाश्रयणं क्रिया तस्याः स्पर्धा ततः कण्ठरुचिच्छलेनः भवद्रिपुकीर्तिः शिवमाश्रितेति स्पर्धयेव तव कीर्तिरपि शिरोगङ्गाच्छलेन शिवं श्रिता ।

अथ पूर्वजक्रमो यथा—वर्ण्यो वैरिस्त्रीविरहानलस्तत्रारोपितो नृपप्रतापस्तस्य वैरिस्त्रीहृदयप्रवेशः क्रिया तस्याः कारणं पूर्वजक्रमस्ततोऽस्मत्पूर्वजः कृपाणो वैरिहृदयेषु प्रविष्ट इति कृपाणोद्भवो नृपप्रतापोऽपि विरहानलच्छलेन वैरिस्त्रीहृदयेषु प्रविष्टः ।

वर्ण्यो वैरिस्त्रीस्तनपाण्डिमा तत्रारोपितं नृपयशस्तस्य क्रिया वैरिस्त्रीकुचाश्रयणं तस्याः कारणं पूर्वजक्रमस्ततो मत्पूर्वजक्रमस्ततो मत्पूर्वजः । कृपाणो रिपुकुम्भिकुम्भेषु विललासेति कृपाणोद्भवं नृपयशोऽपि रिपुकुम्भिकुम्भसोदरेषु वैरिस्त्रीकुचेषु पाण्डिमच्छलेन विललास ॥

आरोप्य वर्ण्यवस्तूनां क्रियासु सदृशीः क्रियाः ।
तासां रोपितक्रियाणां कल्प्यमुत्पत्तिकारणम् ॥ १४४ ॥

वर्ण्यवस्तूनां क्रियासु कम्पनादिषु नर्तनादिकाः, भ्रमरकूजनादिषु जपनस्तवनाक्रन्दाशीर्वचनादिकाः क्रिया आरोपयेत् । ततस्तासामारोपितक्रियाणां नर्तनादीनां हर्षादीनि, जपनादीनां श्रेयःप्राप्त्यादीनि कारणानि कल्पनीयानि ॥

इति श्रीजिन० अर्थसिद्धिप्रताने चतुर्थे क्रियास्तवकश्चतुर्थः ॥

---

अथाधारपरिवारादिभ्योऽर्थोत्पत्तिर्यथा—

वनगिरिजलभास्वद्वातशीताग्निलोह-
प्रहरणपरघट्टाभ्येतजन्तुप्रकारैः ।
सरिदधिगममौनध्याननैश्चल्यमन्त्रा-
नशनमखिलभागायाचितत्वान्तितत्वैः ॥ १४५ ॥

वर्ण्यवस्तुना निर्जितस्य सदृशस्य वस्तुनो वनादिभिरमाभिर्भावैरर्थः समर्थनीयः। यथा—स्त्रीनेत्रजिता मृगा वनं गताः। मध्यजितः सिंहो गिरिगह्वरे प्रविष्टः। मुखजितं कमलं जलदुर्गमगात्। स्थैर्यजिता गिरयो भास्वत्तापवातशीताग्निछखदुःखानि सहन्ते। भ्रमरः संघट्टं तितिक्षते। अभ्येतहंसादीनां शरीरखण्डैरप्युपकारं कुरुते। गतिजिता हंसाः शरदधिगमं कुर्वते। दम्भजितो बकः सरित्तटे मौनी ध्यानं कुरुते। तुङ्गत्वजितो मेरुर्लोकोऽदृश्य स्थाने निश्चलीबभूव। मुखजितं कमलं भ्रमरारवैर्मन्त्रान् जपति। नखजितानि रत्नानि गिरौ निराहाराणि तस्थुः। अधरजितानि प्रवालानि जलमध्ये जलाहारतया वर्तन्ते। अङ्गसौकुमार्यजितं शिरीषकुसुमं वनेऽयाचितवृत्तिं कुरुते। मुखजितं कमलं भ्रमराङ्घ्रिघातैरपि क्षमां कुरुते। उदाहरणानि। वर्ण्येन जितपदार्थस्येत्यादिभिरुपायैरर्थः समर्थनीयः॥

लज्जाकोपतपोनाशसेवाक्रन्दास्यकृष्णताः ।
रागात्पाण्डुरता शस्त्रीविषझम्पादियोजने ॥ १४६ ॥

वर्ण्यजितस्य वस्तुनः पराभवोद्भवा एते लज्जादयो भावा यथौचित्यं योजनीयाः। यथा—मुखजितं पद्मं लज्जयेव वनं गतम्। कोपतप्तमिव लज्जाशयं ययौ। नद्यामाकण्ठमग्नं जलाहारतया तपस्तनुते। अथवा जलदुर्गनष्टं शम्भोरम्भोमूर्तेर्वा सेवां करोति। भ्रमरारवैराक्रन्दं कुरुते। नीलालिभिः काकनदमनुरक्ततां धत्ते। नेत्रजितं कैरवं दुःखात् पाण्डुरतां गतम्। भृङ्गश्रेणामिषादुदरे शस्त्रीं क्षिपति। जलान्तर्झम्पां ददौ। भृङ्गमिषाद्वा विषं भक्षयति। एवं यो रक्तपदार्थः स सदृशेन जितः कोपादिव रक्तोऽन्यथवा कयाचिद्युक्त्या सानुरागो भणनीयः। यः श्वेतः श्यामश्च सदृशजितो दुःखादिवोत्पाण्डुरः कृष्णश्च समर्थनीयः॥

वृत्ताङ्गादिजवस्तूनां वनाद्यैः सत्पदादिकम् ।

किञ्चिद्वस्तु वृक्षाङ्गादिमयं किञ्चिन्मृन्मयं किञ्चिद्धातुमयं किञ्चित्पाषाणमयं किञ्चिच्चर्ममयं किञ्चित्कार्पासमयमित्यादिवस्तूनां वनवासादितपोभिः शुभस्थानाश्रयशुभाकारशुभक्रियाशुभपरिवारादीनां प्राप्तिः सम्भाव्या।

यद् वृक्षाङ्गादिमयं वस्तु तस्यैते भावा विभाव्याः। यत्पूर्वं वृक्षभवे रवितापशीतवातादिकष्टमयाचितव्रतादिभिस्तपस्तप्तं तन्मूलत्वक्पत्रपुष्पफलच्छायादिभिः सूर्यातपतप्तानां रोगार्तानां भोगार्थिनां मङ्गलार्थिनां मर्त्यानां भृङ्गाणां पक्षिणां चतुष्पदानामुपकृतं तेन वृक्षाङ्गमयवस्तुनः शुभस्थानादिप्राप्तिः।

मृन्मये वस्तुन्येते भावाः समारोप्याः। यत्पूर्वं कुद्दालघातपादप्रहारयन्त्रबन्धप्रवेशचक्रारोहणचक्रभ्रमणपाषाणपिण्डिकाकाष्ठहस्तकरघातरवितापशोषवन्हिप्रवेशपरीक्षा-

थं शिरःप्रहारादिभिः कष्टमनुभूतं, यत् जनबुभुक्षातृष्णाहारान्नजलाधारतया लोकोपकारः कृतस्तैः सुकृतैर्मृन्मयवस्तुनो भव्याधारादिकमारोप्यम् ।

धातुमये वस्तुन्येते भावा भावनीयाः । यत्पूर्वं वन्हिप्रवेशहस्तपुटघातसन्दंशग्रहण-यन्त्रान्तराकर्षणताडनच्छेदनघनप्रहारटङ्किकाघातादि कष्टमनुभूतं, यत् देवादिमण्डनतया कान्ताभूषणतया लोकाध्यायकभोजनोदकाद्याधारतया देवदेव्यादियन्त्राधारतया लोको-पकारः कृतस्तैः सुकृतैर्धातुमयादिवस्तुनः शुभस्थानादि सम्भाव्यम् ।

पाषाणमये वस्तुन्येते भावा भाव्याः । यत्पूर्वं टङ्कविदारणघनप्रहारटङ्किकाघातादि कष्टमनुभूतं, यद्धर्मस्थाने देवतादिहेतुतया परोपकारः कृतस्तैः सुकृतैः पाषाणमय-वस्तुनः शुभस्थानादि सम्भाव्यम् ।

चर्ममये वस्तुन्येते भावा आरोप्याः । यत्पूर्वं कर्तिकाच्छेदनक्षारक्षेपविक्रयचर्म-कारपादपातरम्पिकाच्छेदसूचिकावेधदवरकबन्धव्यङ्गप्रहारादि कष्टमनुभूतं, यत्पादत्राण-तया, ब्राह्मणाद्युपयोगिकरपत्रिकादिकतया, पुस्तकाद्यावरणतया इत्यादिभिः परोपकारः कृतस्तैः सुकृतैश्चर्ममयवस्तुनः शुभस्थानाद्यूह्यम् ।

कार्पाससूत्रमये वस्तुन्येते भावा भाव्याः । यत्पूर्वं शीतवाताद्ययाचिताम्बुपान-कर्मकरनखच्छेदविक्रयापवरकान्तरक्षेपलोहोपलवर्षणतुलारोहणान्तःसाराकर्षणपिञ्जघातन-विदारणयन्त्रारोहतर्कुभ्रम्याकर्षणतन्तुवायकराकर्षणकाष्ठप्रहारविपणिक्रियादि कष्टमनु-भूतं तूलेन, तूलिकादिरूपतया वस्त्रेण परगुह्याच्छादनदेवतादिपरिधानादितया लोक-शीतातपादित्राणादितया परोपकारः कृतस्तैः सुकृतैः कार्पाससूत्रमयवस्तुनो भव्यस्थानादि सम्भाव्यम् ।

एवं सर्ववस्तूनां पूर्वकृतं कष्टं सुकृतं वाऽऽरोप्य भव्यस्थानाश्रयादिभिरर्थः समर्थनीयः ॥

जितस्य सेवा स्वगता छद्मगा प्रतिबिम्बगा ॥ १४७ ॥

जितस्य द्वौ प्रकारौ भवतः—विदेशगमनं, जेतुः सेवाकारणं वा । विदेशगमनं वनादिषु प्रपञ्चितम् । सेवा तु त्रिविधा । स्वगता यथा—भारत्या गतिजितो हंसः पदसेवां चकार । पार्वतीमध्यजितः सिंहः सेवां कुरुते ।

छद्मगा यथा—कामिन्या वक्त्रजितः सर्पो वेणीमिषादनुचरीभूतः । मुखजितश्चन्द्र-श्चन्दनवृत्ततिलकच्छद्मना सेवते ।

प्रतिबिम्बगता यथा—मुखजितश्चन्द्रः कपोलप्रतिबिम्बतयाऽनुप्रवेशं चक्रे । जल-माधुर्यैर्जितश्चन्द्रः प्रतिबिम्बतया सरः सेवते स्म । इत्याद्यूह्यम् ।

सेवासुकृततः श्रेयोन्तरप्राप्तिर्द्विषज्जयः ।

यथा—गतिजितो हंसो यद्भारतीपदसेवां चक्रे तेन सुकृतेन तज्जातिरपि मधुर-शब्दाऽऽसीत् । मध्यजितः सिंहो यत्पार्वतीपदसेवां चक्रे तेन सुकृतेन स्वजातिराज्य-मन्यैरनाक्रमणीयत्वं च लेभे । जितया कमलश्रिया कामिनीमुखाश्रयणेन निजरिपुश्चन्द्रो-ऽपि जीयते स्म । मुखजितचन्द्रेण स्फटिकादर्शच्छद्मना कामिनीमाश्रित्य स्वोदयेऽपि सदा विकासि सश्रीकं करच्छद्मकमलमधः क्रियते, मुकुलीक्रियते च ।

वर्ण्यवस्तुनः स्पर्धापापेन सदृशं वस्तु सदूषणं कल्प्यम् । यथा—मुखस्पर्ध

कमलं स्पर्धोद्भवपापै राजप्रसादविकलं सकण्टकं च जातम् । यशःस्पर्धी चन्द्रः सकलङ्कः क्षयी च जातः ।

सुकृतेऽपि सदोषता । वर्ण्यवस्तुनः स्पर्धापातकेन सदृशं वस्तु सुकृतं कुर्वाणमपि सदूषणं स्यात् । यथा—मुखस्पर्धां कुर्वन् चन्द्रो महेश्वरं सेवमानोऽपि सकलङ्कोऽभूत् । मुखस्पर्धोद्भवैः पापैः कमलं हंसद्विजान् शरीरखण्डैरपि प्रीतान् कुर्वाणं सकण्टकं भवति ॥

अथ तपसाऽर्थोत्पत्तिभेदाः—

स्यात्तपः स्वगतं छद्मगतं च प्रतिबिम्बगम् ॥ १४८ ॥

तपोविधिस्त्रिधा आत्मनैव स्वयं कृतं, सदृशवस्तुच्छद्मना वा कृतं, जलादिषु प्रतिबिम्बतया वा कृतम् । त्रिविधमप्यग्रे उदाहरिष्यते ।

वर्ण्यादिभिस्तपो वर्ण्यजितस्यैतत्कलाप्तये ।

वर्ण्यजितस्य वस्तुनो वर्ण्यशोभाप्राप्तये वर्ण्यजयाय वा वनादिभिस्तपः कल्पनीयम् । स्वगतं यथा—मुखजितं कमलं तच्छोभाप्राप्तये जलवासादि तपः कुरुते ।

छद्मगतं यथा—मुखशोभाप्राप्तये चन्द्रो वने लताशाखावलम्बी कुसुमस्तबकच्छलेन तपस्तनुते ।

प्रतिबिम्बगतं यथा—मुखलक्ष्मीलब्धये चन्द्रो रत्नभूमिप्रतिबिम्बतया शैलशिरसि तपस्तनुते ।

एवं सर्वभेदेषु त्रिविधत्वं बोध्यम् ॥

तपसा तत्पदावाप्तिः

जितस्य सदृशस्य तपसा वर्ण्यशोभाप्राप्तिः । यथा—यत्कमलेनाकण्ठजले जलाहारेण तपस्तप्तं तेन नारीमुखसमानता लब्धा । यच्चन्द्रेण वने कुसुमस्तबकच्छलेन तपस्तप्तं तेन स्त्रीमुखलक्ष्मीर्लब्धा । यद् भृङ्गश्रेणिभिर्विष्णुपदाम्बुजे कान्तिधोरणीमिषेण सेवा कृता तेन नारीकटाक्षच्छटोपमा प्राप्ता ॥

दुःखादिस्तदनाप्तिकः ॥ १४९ ॥

तपसाऽपि वर्ण्यलक्ष्म्या अप्राप्तौ जितं वस्तु दुःखचेष्टितानि कुरुते । यथा—मुखजितं कमलं जलवासादिभिरपि मुखलक्ष्मीं न प्राप ततो भ्रमरारवैराक्रन्दं कुरुते । वेणीजिता भृङ्गश्रेणी वने मकरन्दास्वादमात्राशनाऽपि वेणीसाम्यं न प्राप ततः साक्रन्दा भ्रमति ॥

तेनापि न हि तत्प्राप्तिः

तपसाऽपि वर्ण्यशोभां जितं वस्तु न लभते । यथा—कमलं जले आकण्ठमग्नं तपस्तेपे परं नारीवक्त्रोपमां न प्राप । हंसः सरस्वतीपदसेवां चक्रे परं नारीगत्युपमां न प्राप ॥

महत्प्राप्तिर्न तस्य तु ।

तपसा महतोऽन्यस्य श्रेयसः प्राप्तिर्भवति न पुनर्वर्ण्यशोभाप्राप्तिः । यथा—कमलं जलवासादिभिः श्रीपदं राजहंससेव्यं जातं, न पुनः स्त्रीमुखोपमां लेभे । चन्द्रेण ज्योत्स्नादानैश्चकोरप्रीणनासुकृतैः शिवशिरसि पदं लब्धं न पुनः स्त्रीमुखोपमानम् ॥

तदाप्तौ दुष्कृतं विघ्नः

तपसा वर्ण्यलक्ष्माप्राप्तौ जितवस्तुनः किञ्चिद्दुष्कृतं विघ्नः कल्पनीयम् । यथा—कमलं शम्भोरम्भोमूर्त्तेः सेवया मुखोपमामयास्यच्चेन्नित्याश्रितभृङ्गबन्धनं नाकरिष्यत् । विष्णुपदसेवासुकृतेन विष्णुपदी तत्कीर्तितुलनां प्राप्नुयाद्यदि नीचगमनं न कुर्यात् ।।

तदाप्तावपरं शुभम् ॥ १५० ॥

तपसा वर्ण्यशोभाप्राप्तौ सदृशवस्तुनोऽन्यदपि श्रेयः सम्भाव्यम् । यथा—कमलं जलवासादिभिर्मुखोपमां प्राप्य लक्ष्मीस्थानं राजहंससेव्यं च बभूव । जलवासादिभिः पाञ्चजन्यो नारीकण्ठोपमानं प्राप्य लक्ष्मीपतेरपि करारविन्दानुग्राह्यो बभूव ॥

श्रेयस्तदाप्तौ दोषेऽपि

तपसा वर्ण्यस्योपमाप्राप्तौ सदृशवस्तुनः सदोषस्यापि श्रेयः कल्पनीयम् । यथा—जलवासादिभिर्मुखोपमां प्राप्तं कमलं सकण्टकमपि देवशिरांस्यधिरोहति । विष्णुपदसेवया गङ्गा यत्कीर्तिसमतां प्राप्य नीचगामिन्यपि शिवशिरःसंश्रयाऽऽसीत् ॥

तदाप्तौ नर्त्तनादिकम् ।

तपसा वर्ण्योपमाप्राप्तौ हर्षेण सदृशवस्तुनो नर्तनादीनि कल्पनीयानि । अमूनि यथा—

नृत्योत्कन्धकरता स्मेरगौरवापीडपुष्टता ॥ १५१ ॥
आश्रितातिथिविप्रादिदानं देवादिपूजनम् ।

यथा—जलवासादिना स्त्रीमुखोपमां प्राप्य कमलं वातचलितपत्रैर्नृत्यं रचयति । राज्ञः स्थैर्योपमां प्राप्य मेरुरुत्कन्धरोऽभूत् । गम्भीर्योपमां प्राप्य जलधिः सर्वदिग्व्यापी बभूव । मतिसमतां प्राप्य बृहस्पतिर्देवगुरुतां गतः । सुकेशकेशोपमां प्राप्य कलापी शिखाच्छलादापीडं धत्ते । स्थैर्योपमां प्राप्य गिरिः शिरस्थमेघावलिव्याजान्मुकुटं धत्ते । राज्ञः स्थैर्योपमां प्राप्य मेरुः स्थूलोऽभूत् । मुखशोभां प्राप्य चन्द्रः स्वाश्रितचकोरान् स्वेच्छया ज्योत्स्नापानं कारयति । मुखलक्ष्मीं लब्ध्वा कमलं हंसद्विजानतिथीन् भृङ्गानाहारदानैः प्रीणयति । मुखोपमां प्राप्य चन्द्रेण स्वकलया शिवपूजा कृता । एवं चले नृत्यम्, उच्चे गर्वोत्कन्धरता, विस्तीर्णे स्मेरता, पूज्ये गौरवं, शिरःस्थवस्तुन्यापीडः, स्थूले पुष्टता कल्पनीया । इत्याद्यनेकोल्लेखैरर्थः कल्पपीयः ॥

अर्थोत्पत्तये प्रकारान्तरमाह—

द्वेष्यस्याङ्गसुहृद्भङ्गैः

वर्ण्यवस्तुना जितो यः पदार्थस्तस्य वर्ण्यं तावद् द्वेष्यम् । ततो द्वेष्यस्य वर्ण्यस्य यान्यङ्गानि तेषां साम्येन सुहृद्रूपाणि यानि वस्तूनि तेषां जितपार्श्वाद्भङ्गः कल्पनीयः । यथा—नार्या कुचाभ्यां जितः कुम्भी नारीमुखमित्राणि कमलान्युन्मूलयति । नार्या मध्यजितः सिंहो नारीनेत्रमित्राणि मृगकुलानि भिनत्ति ॥

अङ्गविद्वेषिपोषणैः ॥ १५२ ॥

द्वेष्यस्याङ्गानां समतया द्वेषिरूपाणि यानि वस्तूनि तेषां जितपदार्थपार्श्वात्पोषणं कार्यम् । यथा—राज्ञा प्रतापजितो रविः राजयशोमित्रचन्द्रद्वेषिणः कमलानि सश्रीकानि

कुरुते । राज्ञा यशोजितश्चन्द्रो राजप्रतापमित्ररविद्वेषिणः कैरवाणि विकासयति ॥

अङ्गद्वेषिसुहृत्पोषैः

द्वेष्याङ्गद्वेषिणां ये सुहृदस्तेषां जितपदार्थपार्श्वात् पोषो विधेयः । यथा—नार्या मुखजितश्चन्द्रः स्त्रीकटाक्षद्वेषिषट्पदश्रेणिप्रीतिदायीनि कैरवाणि विकासयति । नार्या गतिजितो हस्ती मुखद्वेषिकमलोपासकान् भृङ्गान् दानेन पुष्णाति ॥

अङ्गद्वेषिद्विषद्वधैः ।

द्वेष्याङ्गद्वेषिणां यानि द्विषद्रूपाणि वस्तूनि तेषां जितपदार्थपार्श्वाद्वधो विधातव्यः । यथा—नार्या धम्मिल्लजितो राहुः स्त्रीमुखद्वेषिकमलद्वेषिणं, नारीकुचयुग्मद्वेषिणं वा चन्द्रं पीडयति । नार्या वेणीजिता भृङ्गश्रेणी स्त्रीमुखद्वेषिचन्द्रद्वेषिकमलानि पदाघातैः पराभवति ॥

समानवस्तुनः शोभाचौर्यान्नाशोऽथ निग्रहः ॥ १५३ ॥

वर्ण्याङ्गसदृशं यद्वस्तु तस्य वर्ण्याङ्गशोभाचौर्यं परिकल्प्य वनादिषु नाशो निग्रहो वा कल्पनीयः । यथा—मृगा नारीनयनशोभां हृत्वा वने नष्टाः । स्त्रीमध्यश्रियं हृत्वा सिंहो गिरिगह्वरे गतः । नारीमुखलक्ष्मीहरं कमलमिति राजहंसैः खण्डशः क्रियते । रात्रौ स्त्रीमुखलक्ष्मीं हरति चन्द्र इति प्रातःकालेन छिन्नकरः क्रियते ॥

निपातायतनद्रव्यभङ्गप्राकारलङ्घनैः ।
राजवेषासनस्थानविरुद्धादिनिषेवणैः ॥ १५४ ॥
अगम्यगमनापेयपानकाभक्ष्यभक्षणैः ।
अपह्नवाद्भवेद्दिव्यं प्रायश्चित्ततदन्यतः ॥ १५५ ॥

दिव्यं यथा—

हत्वाऽपि कान्तिधनमस्य नृपस्य कीर्तेर्दिव्यं सृजन्निव जगत्यपवादभीतः ।
इन्दुः सुधावपुरपि प्रभुरोषधीनामप्येष लक्ष्ममिषसर्पभृतौ न शुद्धः ॥

प्रायश्चित्तकारणं यथा—

समरे यत्करवालः पीत्वा मातङ्गकुम्भकीलालम् ।
अनुतापीव व्रतयति रिपुनृपतीनां यशःक्षीरम् ॥

अथ भ्रमप्रकारैरर्थोत्पत्तिर्यथा—

स्वस्थादिभिर्भ्रमात् कार्यप्रवृत्तिः परिकल्प्यते ।

स्वस्थच्छन्नस्थप्रतिबिम्बस्थता पूर्ववत् । क्रमाद्यथा—

नलिनानि पानमधुभाजनानि नः पिदधाति यः स विधुरेष गोचरः
इति रोषणैरिव मधुव्रतैर्धुतं सुदतीमुखं सुरभिवास्यमारुतम् ॥

ताटङ्कामुक्तमुक्तालिच्छलतस्तारकाततिः ।
निजभर्तृभ्रमेणेयं भेजे चन्द्रमुखीमुखम् ॥

यत्र वैदूर्यवर्येषु कुट्टिमेषु तमोभ्रमात् ।
प्रतिबिम्बेन तद्भित्तौ पतिरापतति त्विषाम् ॥

भ्रमकारिणोऽपि प्रतिबिम्बता यथा—

मणिनद्धेषु यत्सौधाङ्गणेषु प्रतिबिम्बितम् ।
शशाङ्कं कैरवभ्रान्त्या भजन्ते भृङ्गराजयः ॥

कार्यप्रवृत्तिरन्यत्र कारणप्रत्यये भ्रमात् ॥ १५६ ॥

यथा—

एकत्र क्वचिदेव देवसदने सम्प्रेक्ष्य साक्षात्कृत—
प्रद्योतं तपनीयकुम्भमुदयक्ष्माभृद्धृतार्कभ्रमात् ।
आश्लिष्यन्त्यनिशं निशास्वपि वियद्गङ्गारथाङ्ग्यो मिल-
द्भर्तृभ्रान्तिभृतः पयोगतनिजच्छायाविमुग्धाशयाः ॥

कार्यप्रवृत्तौ भ्रमतः साफल्यं जायते क्वचित् ।

यथा—

विधुमणिमयसौधप्राङ्गणे यत्र चन्द्रप्रतिमितिमतिफुल्लत्कैरवभ्रान्तिभाजः ।
असकृदमृतबिन्दुस्यन्दपानेन भृङ्गाः प्रसृमरमकरन्दास्वादसौख्यं लभन्ते ॥
यत्रोन्मुखं चातकवृन्दमभ्रभ्रमेण चैत्योत्थितधूपधूमे ।
वेल्लत्पताकाग्रगृहीतमुक्तनभोनदीबिन्दुभिरेति तृप्तिम् ॥

भ्रमात् कार्यस्य नैष्फल्ये भ्रमः सत्येऽपि वस्तुनि ॥१५७॥

यथा—

आलिङ्ग्योच्चैः सुरगृहशिरःशातकौम्भीयकुम्भान्
भर्तृभ्रान्त्या निशि विफलिताः स्वर्गगङ्गारथाङ्ग्यः ।
अर्कालोकादुपगतमपि प्रीतिभाजं रथाङ्गं
मिथ्या बुद्ध्वा सपदि न परीरब्धुमारात् त्वरन्ते ॥

भ्रमात् कार्यस्य नैष्फल्ये सत्यप्यकरणं तथा ।

यस्मिंश्चित्रपतत्पतत्रिपरुषोत्कर्षेण वेश्मान्तरे
मार्जारः परिजर्जरोऽजनि जवादाहत्य सत्यभ्रमात् ।
तान् विन्दन्नभिजीवतोऽपि स पुनः प्राग्भङ्गभावादभि—
व्यक्तं मुक्तविरोधबोधविषयो लोकैः समालोक्यते ॥

भ्रान्तस्य वस्तुनोऽन्यत्वं जायते भ्रमतोऽन्यतः ॥ १५८ ॥

यथा—

चिक्रंसया कृत्रिमपत्रिपङ्क्तेः कपोतपालीषु निकेतनानाम् ।
मार्जारमप्यायतनिश्चलाङ्गं यस्यां जनः कृत्रिममेव मेने ॥

भ्रमज्ञातपदार्थस्य पूरणं च भ्रमान्तरात् ।

यथा—

संक्रान्तं प्रतिबिम्बमम्बरमणेः शुभ्राश्मवेश्माङ्गणे
यत्र प्रातरयत्नपूर्णकलशभ्रान्तिं विधत्ते तथा ।
कासारप्रसरत्सरोरुहपरीरम्भभ्रमेण भ्रमद्-
भृङ्गश्रेणिरिहाश्रिता क्षितितलभ्रान्तिं यथा कल्पयेत् ॥

नैष्फल्ये भ्रमतः कार्यप्रवृत्तेः साऽथ निश्चयात् ॥ १५९ ॥

यथा—

यत्र स्फुरत्स्फटिकनद्धगृहाङ्गणेऽर्कसंक्रान्तबिम्बमवलम्ब्य नितम्बिनीभिः ।
व्यर्थप्रयासकरणोच्चरणाग्रसङ्गान्निश्चित्य सत्यकलशोऽपि किल प्रवृत्तम् ॥

**भ्रान्तस्यापि भ्रमो यः स्याद्विज्ञेयोऽसौ प्रतिभ्रमः ।**

निद्रान्तेषु वने द्विषः सहचरीवक्षोरुहौ वीक्ष्य य-
　　द्युग्येभोन्नतकुम्भविभ्रमभयादार्तं रवं तेनिरे ।
तासु त्रासनिमित्तभित्तिवलितग्रीवासु वेगोल्लस-
　　द्वेणीदण्डविलोकनेन यदसिं व्याशङ्क्य मूर्च्छामगुः ॥

वन्यो हस्ती स्फटिकघटिते भित्तिभागे स्वबिम्बं
　　दृष्ट्वा दूरात् प्रतिगज इति त्वद्द्विषां मन्दिरेषु ।
हत्वा कोपाकुलितरदनस्तत्पुनर्वीक्षमाणो
　　मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्कः ॥

**अन्योन्यभ्रान्तिको भेदो यत्राऽन्योन्यं द्वयोर्भ्रमः ॥ १६० ॥**

यथा—

जम्बूनां कुसुमोद्गमे नवमधुन्याबद्धपानोत्सवाः
　　कीराः पक्वफलाशया मधुकरीश्छिन्दन्ति मुञ्चन्ति च ।
एतेषामपि जातकिंशुकदलश्रेणीसमानत्विषां
　　पुष्पभ्रान्तिभृतः पतन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥

आरूढाः संक्रमैर्यद्रिपुगृहशिखराण्यूर्ध्वमालोक्य भित्ति-
　　व्याघाताद् व्यर्थयत्ना दिवि जलदगजान्नैव हिंसन्ति सिंहाः ।
अश्रान्तं सोऽपि तत्र प्रतिकृतकमृगारातिनित्यावलोकात्
　　जीर्णातङ्को गजेन्द्रः सविधमपि भवन्नैव तेभ्यो बिभेति ॥

इत्याद्यनेकोल्लेखैर्भ्रमादर्थोत्पत्तिः कार्या ॥

**वस्त्वन्तरक्रियारोपैः**

वस्तुनि तद्विरुद्धवस्तुक्रिया चित्रार्थमारोप्यते । यथा—

इन्दुमुखी कुमुदाक्षी रम्भोरूः कमलचारुकरचरणा ।
अमृतद्रवलावण्याद् हृदयगता देवि ! किं दहसि ॥

घनारिनारीनयनाश्रुनीरैर्यशोलता यस्य विभाति युक्तम् ।
प्रतापवन्हिर्ज्वलितो यदेतैर्जगच्चमत्कारकरं तदेतत् ॥

शशिशुक्लाऽपि यत्कीर्तिश्चक्रेऽरिकुलकालिमाम् ।
पङ्काभमपि यन्मित्रौज्ज्वल्यं यद्वैरिदुर्यशः ॥

**कार्यारम्भनिवृत्तिभिः ।**

कार्यारम्भात्पदार्थस्य केनापि कारणेन निवृत्तिः कल्पनीया । यथा—

भुवं भुजे योऽधित याचकेभ्यो दिक्कुञ्जरान् दातुमना मनस्वी ।
तदेकयुग्यं भजतां प्रभुत्वं न दिक्पतीनां कृपयाऽहरत्तान् ॥

उपाध्यायात् प्रभोर्मित्रात् सेवकाज्ज्ञातिभावतः ॥१६१॥
सङ्गात्तद्गुणसंक्रान्तिः

यथा—

राजन् ! दानजितेव सेवनविधिं निस्त्रिंशलेखामिषा-
देषा कल्पलता प्रकल्प्य नियतं त्वत्पाणिपङ्केरुहान् ।
सङ्कल्पाधिकदानकल्पनकलां वेत्ति स्म तस्माद्विषां
क्षोणीभोगसुखार्थिनां वितरति स्वर्भोगसौख्यान्यपि ॥

किं त्वया शिक्षितं लक्ष्मि ! पितुः कल्लोलचापलम् ।
यत् त्वं नैकत्र कुत्रासि स्थिरत्वं प्रतिपद्यसे ॥

एतेभ्योऽपि न सा क्वचित् ।

उपाध्यायादिभ्योऽपि सा तद्गुणसंक्रान्तिर्न स्यात् । यथा—

द्विजधनवर्जितमेतद्भवद्भवे यशसि किं न संक्रान्तम् ।
एकतैकवेश्म यस्माद् द्विजराजश्रीर्हृताऽनेन ॥

आहारसदृशोद्गारदेहयुद्भवविपर्ययैः ॥ १६२ ॥

वस्तुनि औचित्यादाहारसदृशयोरुद्गारदेहवर्णयोरुद्भावः कल्पनीयः । क्वाप्याहारादेतयोर्विपर्ययः कार्यः । क्रमाद्यथा—

अतिलौल्यतः कवलयन् मलिनद्युति काननं किमपि दावशिखी ।
बहुभक्षणेन शितिधूममिषात्तनुते स्म भोजनवदुद्गिरणम् ॥

द्विषन्मृगाक्षीनयनाञ्जनानि यदेष नित्यं कवलीकरोति ।
क्षितीश ! तेनाऽशनिसन्निभैव विभा विभाति स्म भवत्कृपाणे ॥

विपर्ययो यथा—

यद्वदन्त्यशनसन्निभमेवोद्गारमित्यनृतमत्र बभासे ।
गीतकं यदुदगारि सुधावत्पीतसीधुभिरपि प्रमदाभिः ॥

सिच्यमानमपि शत्रुकामिनीकज्जलाविलविलोचनाश्रुभिः ।
आहताऽसितमनोऽपि भासते श्वेतभानुसममेव यद्यशः ॥

पदार्थानां मिथः साम्यं स्यादर्थोत्पत्तिकारणम् ।
अतः सदृशवस्तूनि संगृह्यन्ते कियन्त्यपि ॥ १६३ ॥

वर्णाकारयोः सदृशपदार्था उक्ताः । अपरः प्रकीर्णकः सदृशवस्तुसंग्रहः क्रियते । यथा—

तीक्ष्णानि प्रतिभास्त्राणि कटाक्षाः सूचिका नखाः ।
दात्रशल्लकशूलानि कुठारः क्रकचस्तथा ॥ १६४ ॥
असिपत्रद्रुपत्राणि शूलप्राजननेमयः ।
किटिदंष्ट्रा हलं सिंहनखरा मर्मभिद्वचः ॥ १६५ ॥
कुश्यङ्कुशकुशाग्राणि खड्गधारा च हीरकः ।
कर्त्तरी कर्तिकाटङ्काविन्धनं नखभेदिनी ॥ १६६ ॥

महत्तमानि दिक्कालव्योमज्ञानेशकेशवाः ।
आरामः सन्मनोबुद्धिसमुद्रारण्यभूमयः ॥ १६७ ॥
शय्याऽरः पुलिनं श्रोणी कपाटः क्षेत्रवेश्मनी ।
सूक्ष्माणि केशसूच्यग्रत्रसरेणुरजःकणाः ॥ १६८ ॥
मनः सन्मतिसंसारस्वरूपपरमाणवः ।
मङ्गल्यानि दधिदूर्वाचन्दनाक्षतदीपिकाः ॥ १६९ ॥
रसालबिल्वलाशोकपत्राण्यञ्जसुमं फलम् ।
शङ्खसिद्धार्थकौ सिद्धमन्नं मध्वाज्यमामिषम् ॥ १७० ॥
रूप्यं ताम्रं मणिः स्वर्णभूषणान्यंशुकानि च ।
व्यञ्जनं चामराश्छत्रं ध्वजो यानेभवाजिनः ॥ १७१ ॥
ताम्बूलं गीतवादित्रगुरुबन्दिद्विजाशिषः ।
सुस्वप्नशकुने हंसचाषखञ्जनबर्हिणः ।
अङ्गनास्फारशृङ्गाररूपा प्रेमवती प्रिया ॥ १७२ ॥
श्रीवत्समत्स्यदर्पणभद्रासनवर्धमानवरकलशाः ।
स्वस्तिकनन्द्यावर्त्तावष्ट महामङ्गलान्याहुः ॥ १७३ ॥
अमङ्गलानि घूकाहिकपोतशशकौतवः ।
कृकलासो दुःशकुनं दुःस्वप्नं दुरुपश्रुतिः ॥ १७४ ॥
कृतघ्नान्त्यजपाषण्डपतितारिविलापिनः ।
नग्नच्छिन्नाङ्गरोगार्तदीनब्रह्मादिघातिनः ॥ १७५ ॥
सम्मार्जनो खराऽजाङ्घ्रिरजो धूमश्चितोद्भवः ।
छाया शाखोटकविभीतकयोर्मञ्चदीपयोः ॥ १७६ ॥
पवित्राणीशबुद्धार्हद्विष्णुब्रह्मार्कतस्कराः ।
पावकाम्भोमरुद्भूमिवेदवाणीयतिद्विजाः ॥ १७७ ॥
पुरोधा धेनुरतिथिः सुवर्णं दर्भगोमये ।
सत्यं सतां चरित्राणि पूज्यपादरजःकणाः ॥ १७८ ॥
गङ्गा गोदावरी रेवा यमुना च सरस्वती ।
कामरूपः कुरुक्षेत्रान्तर्वेद्यौ कश्यपस्तथा ।
सत्यः सीता दमयन्ती द्रौपद्यरुन्धती तपः ॥ १७९ ॥
ब्रह्मचर्यं हरिश्चन्द्रनलरामयुधिष्ठिराः ।
अपवित्राणि रक्तास्थिशकृद्दुश्चरितान्त्यजाः ॥ १८० ॥
रजस्वला श्मशानोर्वीभस्माङ्गाराः शवानि च ।
कृतघ्नस्वामिविश्वासद्रोहिब्रह्मादिघातिनः ॥ १८१ ॥
शरीरच्युतकेशाद्युच्छिष्टान्नर्द्धिककुकुराः ।
सुखदानि प्रियागीतनृत्यवाद्यादि नाटकम् ॥ १८२ ॥
आरामः सुमनोरामारामाविभ्रमकेलयः ।

सुखशय्या शशी दोला स्वातन्त्र्यं श्रीः सुतोद्भवः ॥ १८३ ॥
नष्टाप्तिः स्वस्पृहालब्धिर्वियुक्तप्रियसङ्गमः ।
दाता विद्वान् सुहृद्विद्या स्वर्गः पीयूषमप्सराः ॥ १८४ ॥
धर्मः सद्वचनं सन्तः सन्तोषज्ञानमुक्तयः ।
दुःखदान्याधिनरकौ काराव्याधिविरोधिनः ॥ १८५ ॥
कुभार्या नैःस्व्यकुग्रामवासाः कुस्वामिसेवनम् ।
कन्याबहुत्वं वृद्धत्वे पत्न्याः पुत्रस्य वा मृतिः ॥ १८६ ॥
बालत्वे मातृमरणं निवासः परवेश्मनि ।
दुर्लभे नीरसे स्नेहहीने पररते रतिः ॥ १८७ ॥
वर्षाप्रवासौ द्वे पत्न्यौ कुभृत्योऽर्धहलः कृषिः ।
कलङ्को निष्कलङ्कस्य मानिनीमानखण्डना ॥ १८८ ॥
स्थिराणि पृथिवी शैलो धर्माधर्मौ सतां मनः ।
सती शैलं रणे धीरः प्रतिपन्नं महात्मनाम् ॥ १८९ ॥
अस्थिराणि नदीपूरलहरीबिन्दुबुद्बुदाः ।
विद्युद्धूमस्फुलिङ्गोल्कानला दीपोऽनिलाहतः ॥ १९० ॥
मत्स्यः कपिध्वजो सन्ध्या हस्तिपुच्छकरश्रुतिः ।
कन्दुकश्चामराश्चक्रं दोलास्त्रीविभ्रमश्रियः ॥ १९१ ॥
निमेषोन्मेषरसनानेत्राङ्गायूंषि यौवनम् ।
स्नेहशक्रधनुःस्वामिप्रसादस्वप्नदुर्जनाः ॥ १९२ ॥
सवेगान्यनिलेन्द्राश्वमनस्तादर्याऽश्वद्रूकशराः ।
नदी विमानहनुमन्तौ मीनोष्ट्रे णपक्षिणः ॥ १९३ ॥
मन्दानि शनिः पङ्गुर्मुनिर्बालो नितम्बिनी ।
खञ्जनः पुण्यपुरुषो हंसो वृषभहस्तिनौ ॥ १९४ ॥
बलिष्ठानि शिवो विष्णुः स्कन्देन्द्रगरुडानिलाः ।
श्रीरामहनुमद्भीमा बलदेवो बलिः पविः ॥ १९५ ॥
सुदर्शनं सुरा दैत्याः पञ्चास्यशरभौ गजः ।
महावराहदिग्दन्तिशेषकूर्मकुलाचलाः ॥ १९६ ॥
पृथुरैरावतश्चक्री सतीस्वान्तं पुराकृतम् ।
प्रतिपन्नं प्रतिज्ञा च महतां स्त्री जडा ग्रहाः ॥ १९७ ॥
अबलिष्ठानि रोगार्तबालक्षुधितकातराः ।
बलात्कृतानि कार्याणि नारी पापधनो नृपः ॥ १९८ ॥
क्रूराणि सर्पमार्जारमकरव्याधपोत्रिणः ।
हर्यक्षदुर्जनश्येनस्तेनप्रत्यन्तवासिनः ॥ १९९ ॥
अक्रूराणि शिशुः साधुर्धार्मिको धर्मनन्दनः ।
सुस्वामिभृत्यमित्राणि तरवश्च गोः सुगेहिनी ॥ २०० ॥

मधुरध्वनयो हंसमयूरपिकसारसाः ।
कामिनी कुररः कङ्कीरपारावतालिनः ॥ २०१ ॥
चातकः ककुहः केतुकिङ्किणौ घर्घरावली ।
वेदना हतनादश्च बालादिपदघर्घराः ॥ २०२ ॥
वेणुवीणादिमञ्जीरमेखलाकङ्कणक्वणाः ।
गन्धर्वाप्सरसौ हाहाहूहूतुम्बुरुकिन्नराः ॥ २०३ ॥
गान्धारगायिनो हंसाः केकिनः षड्जकेकिनः ।
कोकिलाः पञ्चमोल्लापाः क्रौञ्चा मध्यमराविणः ॥ २०४ ॥
कलभा निषादरावा धैवतध्वनयो हयाः ॥ २०५ ॥
वृषभा ऋषभारावा विज्ञेयाः स्वरवेदिभिः ॥ २०६ ॥
कठोररटिता घूकघरट्टकरभाः खराः ।
मण्डूककोलकाकोलकपोताः कुकुरः शिवा ।
कपाटानां खटात्काराः श्रृङ्खलानिगडारवाः ॥ २०७ ॥

षट्पदी ।

महाशब्दा घनेन्द्रेभतादर्यपत्राब्धिवीचयः ।
अब्धिमन्थः शिवस्याट्टहासस्तु डमरुध्वनिः ॥ २०८ ॥
सिंहोष्ट्रहनुमद्रत्तःदक्ष्वेडासांराविणो रवाः ।
मान्यब्धिकृष्णशङ्खौघमल्लदोःस्फालनध्वनिः ॥ २०९ ॥
निर्घातरथघोषज्याटङ्कारो गजवाजिनः ।
भटढक्काः शिखोद्धारस्फारनिर्झरघर्घराः ॥ २१० ॥
घण्टाश्चैत्यगजादीनां कन्दरादिप्रतिध्वनिः ।
वीराणां निनदो दूराकरणं रुदितारवः ॥ २११ ॥
ततं वीणाप्रभृतिकं तालप्रभृतिकं घनम् ।
वंशादिकं तु सुषिरं विततं मुरजादिकम् ॥ २१२ ॥
एतच्चतुर्विधं वाद्यं बन्दी पञ्चारवो मतः ।
नान्दी द्वादशतूर्याणां निर्घोषो नाटकादिषु ॥ २१३ ॥
भम्भा मउन्द मद्दल करडा झल्लर हुडुक्क कसाला ।
भेरी तिलिमा वंसो सङ्खो पणवोध नाडए नन्दी ॥ २१४ ॥
टुक्का ढक्का डमरु जकाहल वुक्क भेरि लाणयं पवुहो ।
जुग सङ्ख जरड योगा पमद्दल कंसाल रणे नन्दी ॥ २१५ ॥
सुगन्धानि तु कर्पूरकस्तूरीयक्षकर्दमाः ।
घासो मलयजं धूपोऽगुरुर्मीनमदो यशः ॥ २१६ ॥
सुगन्धितैलं स्वर्गद्रुपुष्पाणि कुसुमद्रुतिः ।
पद्मिनीस्त्रीमुखं मेघसिक्तोर्वीग्रन्थिपर्णकः ॥ २१७ ॥
जातीपत्रीलवङ्गैलाकक्कोलौ जातिकाफलम् ।

तज्ञा तमालपत्राणि मद्यसप्तच्छदौ मदः ॥ २१८ ॥
शालयः कुसुमं जाती केतकी बकुलोऽम्बुजम् ।
पाटलाचम्पकौ मल्ली करुणी शतपत्रिका ॥ २१९ ॥
दुर्गन्धानि वपुःस्वेदकुथितान्नादिपूतयः ।
मृतस्नानादिदेहानि पुरीषापानमारुतौ ॥ २२० ॥
शिशिराणि सज्जनवचः प्रभुः प्रसादेष्टसङ्गसत्सङ्गाः ।
काव्ययशःसन्तोषाः सुधाम्बुहेमन्तहिमकराः करकाः ॥२२१॥
उष्णानि तरणिर्वह्निर्वाडवः शिवभालदृक् ।
कालाग्निरुद्रगोविन्दचक्रब्रह्मानलास्त्रभाः ॥ २२२ ॥
वज्रं विद्युद्दवो ग्रीष्मः काराषाग्निर्हसन्तिका ।
आधिर्भ्राष्ट्रो ज्वरो घर्मः प्रतापो दुर्वचस्तपः ॥ २२३ ॥
क्षुद्दोपशापदुर्वासःक्रोधवैरिपराभवाः ।
सपत्नीष्टवियोगेष्टकृतावज्ञास्मरज्वराः ॥ २२४ ॥
कोमलान्यङ्गनाङ्गानि शिरीषं नवपल्लवाः ।
हंसरोमाणि कदलीस्तम्भाः पट्टांशुकान्यपि ॥ २२५ ॥
कठोराणि शिला शैलो वज्रं दुर्जनमानसम् ।
कुस्वामिभृत्यमित्राणि कुपत्नी शाकिनीमनः ॥ २२६ ॥
लोहं वैरिमनो हस्ती नृहस्ततरुणीस्तनौ ।
कृतघ्नो नालिकेरीङ्गुदीकपित्थफलानि च ॥ २२७ ॥
मधुराणि विदग्धोक्तिकाव्यगीतप्रियाधराः ।
सुधामधुपयोनालिकेरीरसशशित्विरः ॥ २२८ ॥
द्राक्षाम्रदाडिमीरम्भाराजादनफलादिजाः ।
रसाः पुष्परसाः कीर्त्तिर्गुडखण्डेक्षुशर्कराः ।
सुरा शिखरिणी मस्तु पायसं पानकानि च ॥ २२९ ॥
कटूनि राजिका हिङ्गु तैलं धुत्तूरकस्तुहिः ।
विषं तुम्बीफलं निम्बेन्द्रवारुणगुडूचिकाः ॥ २३० ॥
क्षाराणि लवणं सौवर्चलं सैन्धवटङ्कणे ।
अवक्षारः स्वर्गिकाजमूत्रं लवणवारिधिः ॥ २३१ ॥
तिक्तानि मरिचं शुण्ठी सरणं शृङ्गवेरकम् ।
पिप्पली पिप्पलीमूलमजमोदादयस्तथा ॥ २३२ ॥
अम्लानि बीजपूराणि जम्बारकरगाम्लिकाः ।
आरनालकपित्थानि निम्बुकान्यम्लवेतसम् ॥ २३३ ॥
द्रवाण्यमृतपानीयघृततक्रपयःसुराः ।
तैलाभ्रमकरन्देक्षुरसः शिखरिणी मधः ॥ २३४ ॥
मषीमदाश्रुरुधिरसूत्रप्रस्वेदपारदाः ।

अवश्यायाम्बुकर्पूरजलचन्द्रोपलद्रवाः ॥ २३५ ॥
तेजस्विनो रविश्चन्द्रतारानिस्वर्णपावकाः ।
नेत्रदन्तनखादर्शा रूप्यं कांस्याभ्रके मणिः ॥ २३६ ॥
सूर्येन्दुकान्तखद्योतमुक्ताविद्रुमहीरकाः ।
पद्मरागो मरकतं वैडूर्यं राजपट्टकः ॥ २३७ ॥
सुरूपा मदनस्कन्दानिरुद्धनलकूबराः ।
अश्विनीपुत्रनकुलनलदेवाः पुरूरवाः ॥ २३८ ॥
दानिनः कामधुक्चिन्तामणिकल्पद्रुमावलिः ।
जीमूतवाहनः कर्णदधीचिशिबिविक्रमाः ॥ २३९ ॥
धन्विनः शिवकृष्णेन्द्रा भार्गवो रामलक्ष्मणौ ।
पार्थभीष्मकृपद्रोणद्रौणिकार्ण्याभिमन्यवः ॥ २४० ॥
आधाराः स्वर्नभोभूदिक्पातालाद्रिवटद्रुमाः ।
तीरग्रामपुरागारप्रासादाः शयनासने ॥ २४१ ॥
पुर्योऽमरावती भोगावती लङ्काऽलका तथा ।
विदर्भा मिथिलाऽयोध्या कान्यकुब्जं कुशस्थलम् ॥२४२॥
कौशाम्बी त्रिपुरी काशी मथुरा हस्तिनापुरम् ।
अवन्ती पाटलिपुत्रं चम्पा द्वारावती गया ॥ २४३ ॥
विदिशा निषधा कोटीवर्षं काञ्ची तमालिनी ।
माहिष्मती भृगुकच्छः काम्पिल्यं वारणावतम् ॥ २४४ ॥
राजानः पृथुमान्धातृधुन्धुमाराः पुरूरवाः ।
हरिश्चन्द्रो भरतश्च कार्तवीर्ययुधिष्ठिरौ ॥ २४५ ॥
मनुः काकुत्स्थसगरौ भगीरथनलौ रघुः ।
अजो दशरथो रामकुशौ श्रेणिकसम्प्रती ॥ २४६ ॥
विद्वन्नृपाः प्रतिष्ठाने शालिवाहनभूपतिः ।
उज्जयिन्यां विक्रमार्कमुञ्जभोजनरेश्वराः ॥ २४७ ॥
मन्त्रिणो वाक्पतिः शुक्रो जाम्बवान् माल्यवानपि ।
सालङ्कायनकूष्माण्डश्रुतशीलास्तथोद्धवः ।
यौगन्धरायणो मुद्राराक्षसश्चाणकात्मजः ॥ २४८ ॥

इति श्रीजिनद० अर्थसिद्धिप्रताने चतुर्थे प्रकीर्णकः पञ्चमः स्तबकः ।

---

अथ सङ्ख्यातोऽर्थोत्पत्तिः कथ्यते—

औचित्यरचितैः संख्याबन्धबन्धुरितक्रमैः ।
उपमाद्यैरलङ्कारैः सुधीरर्थं समर्थयेत् ॥ २४९ ॥

यदैकसंख्यः पदार्थो विवक्षितः स्यात्तदैकसंख्या अन्येऽपि पदार्थाः । यदा हि-

संख्यस्तदाऽन्येऽपि द्विसंख्याः । यदा त्रिसंख्यस्तदाऽन्येऽपि त्रिसंख्याः । एवमन्येऽपि तत्संख्या अलङ्कारेण केनापि संकलिताः काव्ये संगृह्यन्ते । उदाहरणानि स्वस्वसंख्यया दर्शयिष्यन्ते । एकादिसंख्यासंग्रहो यथा—

आदित्यमेरुचन्द्रप्रासादा दीपदण्डकलशाश्च ।
खड्गहरनेत्रशेषस्वर्दण्डाङ्गुष्ठहस्तिकराः ॥ २५० ॥
नासावंशविनायकदन्तपताकामनांसि शक्राश्वः ।
अद्वैतवाद एकैक एवामी सुकविभिर्वर्ण्याः ॥ २५१ ॥

यथा—

एकदन्तो जयत्येकदन्तस्तम्भं दधत्पुरः ।
यो वक्तीव जगद्विघ्नविघाताद्वैतमात्मनः ॥

भुजदृष्टिकर्णपादस्तनसन्ध्यारामलक्ष्मणाः शृङ्गे ।
गजदन्तौ प्रीतिरती गङ्गागौर्यौ विनायकस्कन्दौ ॥२५२॥
पक्षनदीतटरथधुर्यखड्गधाराश्च भरतशत्रुघ्नौ ।
रामसुतौ रविचन्द्राविव्येते द्वन्द्वगा वाच्याः ॥ २५३ ॥

उदाहरणानि—

किं भूचरौ तरणिशीतरुची किमन्यौ रामाच्युतौ किमु गणेशगुहाविहैतौ ।
एतौ पुनः किमुदितौ रघुराजपुत्राविव्याकुलैर्नृपकुलैः सहसैव दृष्टौ ॥
आश्लिष्यतामथ भुजाविव विक्रमस्य मूर्तौ सभाग्रभुवमेकधनुर्भ्रुवन्तौ ।
नत्वा कृते धनुषि सज्जगुणेऽर्जुनेन भीमो मदादिदमुवाच भुवामधीशान् ॥
प्रविष्टौ कुरुसैन्येषु द्रुतं भीमघटोत्कचौ ।
भक्ष्येषु सममेव द्वौ बालकस्य कराविव ॥
पीड्यमाना दृढं ताभ्यां प्रियदोर्भ्यामिव प्रिया ।
सिस्वेद च चकम्पे च संमुमोह च सा चमूः ॥

भुवनवलिवह्निविद्यासन्ध्यागजजातिशंभुनेत्राणि ।
त्रिशिरोमौलिदशाक्षेत्रपालफणकालमुनिदण्डाः ॥ २५४ ॥
त्रिफलात्रिशूलपुरुषाः पलाशदलकालिदासकाव्यानि ।
वेदावस्थाः कम्बुग्रीवारेखा त्रिकूटकूटानि ॥ २५५ ॥
हरहतपुरत्रियामायामा यज्ञोपवीतसूत्राणि ।
जैनेरत्नच्छत्र(?)प्रदक्षिणागुप्तिशल्यानि ॥ २५६ ॥
मुद्राप्रणामगौरवशिवभवमार्गाः शुभेतरा लेख्याः ।
सर्वेऽप्यमी त्रिसंख्योपेताः काव्ये निबद्धव्याः ॥२५७॥

यथा—

कण्ठोऽयमस्या मृदुमध्यतारस्वरत्रयाधार इति त्रिरेखः ।
मुदं ददाति त्रिजगज्जयाय प्रयाणशङ्खो मकरध्वजस्य ॥
किं रोमराजीयमुनातटेऽस्या वलित्रिदण्डी कलयन्ननङ्गः ।
कस्यापि रूपेण जितस्तपस्वी तमेव जेतुं तपते तपांसि ॥

शल्येन धारितस्यासेर्धाराद्वितीयबिम्बतः ।
त्रिमूर्तिरिव रेजेऽसौ त्रिवेदीवेदिजोऽचतुम् ॥

ब्रह्ममुखवेदवर्णा हरिभुजसुरगजरदचतुरिकास्तम्भाः ।
सङ्घसमुद्राश्रमघातगोस्तनाश्रमकषायदिशः ॥ २५८ ॥
गजजातियामसेनाङ्गदण्डहस्ता महाजने वणिजः ।
दशरथपुत्रोपाध्यायध्यानकथाभिनयरीतिगोचरणाः ॥ २५९ ॥
माल्यस्तबककराङ्गुलिसंज्ञासुरभेदयोजनकोशाः ।
एते सलोकपालाः काव्ये योज्याश्चतुःसंख्याः ॥ २६० ॥

यथा—

संसारिस्फुटरोषदोषपटलीखेलाय संश्लेषिणो
मार्गानुग्रतमप्रमादरजनीयामान् निकामाक्षयान् ।
संसारोरुपुरप्रधानपुरुषान् व्यामोहकारागृह-
द्वारप्राहरिकान् क्षिपन्ति चतुरः केचित् कषायत्विषः ॥

वृकोदराद्याः सहसा मनस्विनः सहोदरास्तं परिवव्रिरे नृपम् ।
गुहस्तिनो हस्तमिवाग्रहद्व्रणच्छिदानिदानं रणपारदा रदाः ॥

स्मरबाणपाण्डवेन्द्रियकराङ्गुलीशम्भुमुखमहायज्ञाः ।
विषयव्याकरणाङ्गव्रतवन्हिसुपार्श्वफणिफणाश्चैव ॥ २६१ ॥
परमेष्ठिमहाकाव्यस्थानकतनुवातमृगशिरस्ताराः ।
पञ्चकुलमहाभूताः प्रणामपञ्चोत्तरविमानाः ॥ २६२ ॥
महाव्रतमरुद्धत्तसमितिस्थानकानि च ।
शस्त्रश्रमस्य त्वेतानि बध्नीयात् पञ्चसंख्यया ॥ २६३ ॥

यथा—

पञ्चेषुद्विपभेदपञ्चवदनः पञ्चव्रतस्वस्तरुः
स्वर्णाद्रिः समुदञ्चिपञ्चविषयव्यापारपङ्क्तांशुमान् ।
पञ्चाङ्गस्थितिमुक्तपञ्चमगतिः प्रस्थानपञ्चारवः
सेव्यः पञ्चसमित्पदादिनिलयः पञ्चेन्द्रियाणां जयः ॥

कर्णस्य सूनुर्वृषसेनवीरः शरप्रपातैः परिपीडितायाः ।
पञ्चेन्द्रियाणीव परध्वजिन्या द्राग् द्रौपदेयाम् विधुरीचकार ॥

रसरागव्रजकोणास्त्रिशिरोनेत्रान्तरारिगुणतर्काः ।
दर्शनगुहमुखभूखण्डचक्रिणः स्युरिह षट्संख्याः ॥ २६४ ॥

यथा—

यस्योग्रमूर्त्तेः शरभूर्बभार षड्भिर्मुखैः षण्मुखतां प्रतापः ।
यत्कुण्डलानीव विरेजुरुच्चैश्चश्चद्युतिद्वादशमण्डलानि ॥

विवाहपातालशक्रवाहमुखदुर्गतिसमुद्राः ।
भयसप्तपर्णपर्णगोदावर्यस्त्वमी सप्त ॥ २६५ ॥

यथा—

त्रैलोक्यालयसप्तनिर्भयभयप्रध्वंसलीलाजय-
स्तम्भाद् दुस्तरसप्तदुर्गतिपुरद्वारावरोधार्गलाः ।
प्रीतिप्रोक्षितसप्ततत्त्वविटपिप्रोद्भूतनूत्नाङ्कुराः
शीर्षे सप्तभुजङ्गपुङ्गवफणाः पार्श्वप्रभोः पान्तु वः ॥

दिग्देशकुम्भिपालाः कुलपर्वतशम्भुमूर्तिवसवश्च ।
योगाङ्गव्याकरणब्रह्मश्रुत्यहिकुलान्यष्टौ ॥ २६६ ॥

यथा—

अथाऽवनीभारधुरीचकार जयातिरेकप्रवरो ययातिः ।
गीतं दिगन्तेषु यशो यदीयं श्रोतुं दधेऽष्टश्रुतितां विधाता ॥

भूखण्डकृतरावणमुण्डसुधाकुण्डजैनपद्मानि ।
ग्रैवेयरसव्याघ्रीस्तनगुप्तिनिधिग्रहास्तु नवसंख्याः ॥ २६७ ॥

यथा—

ध्याते यत्र नवग्रहार्त्तिरुदयं नायाति तत्त्वानि यो
व्याचख्यौ न च यस्य वाङ्नवसुधाकुण्डत्रपाकारिणी ।
नित्यं यत्पदपद्मयुग्मपुरतः पद्मानि देवा नव
व्यातेनुर्नवमो जिनः स जयति श्रीपुष्पदन्तप्रभुः ॥

रावणमुखाङ्गुलीचन्द्रवाहयतिधर्मशम्भुकर्णदिशः ।
अङ्गद्वारावस्थादशाः पुनः संख्यया दशैव स्युः ॥ २६८ ॥

यथा—

निजाश्रुनीरैः स्नपिता द्विषद्भिः प्रदीपिता मौलिमणीमृजाभिः ।
दशापि यत्पादनखाः समीयुर्दिशां दशानामपि दर्पणत्वम् ॥

रुद्राक्षनेत्राण्यप्यङ्गोपाङ्गकानि जिनमतोक्तानि ।
एकादश ध्रुवाः स्युस्तथा जिनोपासकप्रतिमाः ॥ २६९ ॥

यथा—

पार्श्वः सोऽस्तु मुदे न तस्य फणिनः सप्तास्यचूडामणी-
संक्रान्तः किल योऽष्टमूर्तिरजनि स्पष्टाष्टकर्मच्छिदे ।
यद्भक्तं दशदिग्जनव्रजमभित्रातुं तथा सेवितुं
यं यत्पादनखाविशत्तनुरभूदेकादशाङ्गोऽपि सः ॥

गुहनेत्रराशिमासाः संक्रान्त्यादित्यचक्रराजानः ।
चक्रिबृहस्पतिहस्ताः सभासदो द्वादश भवन्ति ॥ २७० ॥

यथा—

येन द्वादश सद्व्रतानि धनिनां ता द्वादशानुक्रमं
भिक्षूणां प्रतिमास्तथा निदधिरे सद्भावतो द्वादश ।
यश्च द्वादशकल्पवासवनिषेव्याद्भ्रिर्भवे द्वादशे-
ऽङ्गानि द्वादश संजगौ जिनपतिः शान्तिः स वोऽस्तु श्रिये ॥

प्रथमजिनभवाद्योषा विश्वेदेवास्त्रयोदश भवेयुः ।

यथा—

आद्यो जिनः पातु जगन्ति यस्त्रयोदशक्रियास्थानविमुक् त्रयोदशे ।
जातो भवेत्तीर्थकरः परं गुणस्थतद्गुणस्थानमगात् त्रयोदशात् ॥

विद्यास्थानस्वरभुवनरत्नगुरुषान्वयास्वप्नाः ॥ २७१ ॥
जीवाजीवोपकरणगुणमार्गणरज्जुसूत्रपूर्वभिदाः ।
कुलकरपिण्डप्रकृतिस्रोतस्विन्यश्चतुर्दश तु ॥ २७२ ॥

यथा—

यो गर्भाश्रयणे चतुर्दशशुभस्वप्नाभिसंसूचितो
यो जन्माधिगमाच्चतुर्दशमहापूर्वाब्धिपारङ्गमः ।
यज्ज्ञानैकतटे चतुर्दश लसद्रज्जुप्रमाणोपमा
लोकाः किं तु चतुर्दशो जिनपतिः सोऽनन्तजित् पातु वः ॥

परमधार्मिकतिथयश्चन्द्रकलाः पञ्चदश भवन्तीह ।

यथा—

तिथिं तिथिं प्रतिस्वर्गिभोग्यैकैककलाधिका ।
कलां यस्येशपूजाऽऽसीदेकः श्लाघ्यः स चन्द्रमाः ॥

शुक्रार्चिषः शशिकला विद्यादेव्यश्च षोडश भवन्ति ॥ २७३ ॥

यथा—

विधोः कलैका हरमूर्ध्नि भालमस्या वितेने विधिरेकया च ।
इति द्वितीयादिनिशासु दृश्या वृद्धौ कलास्तस्य चतुर्दशैव ॥

सप्तदश संयमाश्चाऽष्टादश विद्याः पुराणानि ।
द्वीपाः स्मृतयो ज्ञाताध्ययनान्येकोनविंशतिमितानि ॥ २७४ ॥

यथा—

अष्टादशाऽध्यैष्ट सुधीः स विद्यास्त्वष्टादशद्वीपनृपान् विजिग्ये ।
दधौ च धर्मं स्मृतिभिः पुराणैर्विस्पष्टमष्टादशभिः प्रणीतम् ॥

करशाखाः श्रीभर्तुर्विंशोपकाः सकलजननखाङ्गुल्यः ।
दशकन्धरनेत्रभुजास्तु संख्यया विंशतिर्वाच्याः ॥ २७५ ॥

यथा—

विंशत्या नयनैर्दोर्भिर्विंशत्या दशकन्धरः ।
पश्यन् श्लिष्यन् व्यधाद्भ्वाः स विंशतिगुणं सुखम् ॥

कमलदलरावणाङ्गुलिशतमखजलधियोजनानि स्युः ।
शतपत्रपत्रादिमजिनसुतधृतराष्ट्रनृपतिसुताः ॥ २७६ ॥
जपमालामणिहारस्रजोऽस्त्ररुक्कीचकाः शतप्रमिताः ।

यथा—

हस्तेन चेदिक्षितिपः शतघ्नीमुदास घात्याः शतमित्यमर्षात् ।
स्थाप्याश्च पञ्चेति महीं महाङ्घ्रिघातेन चक्रेऽङ्गुलिघातचिन्हाम् ॥

पादाङ्गुलीभिर्युधि केऽपि केऽपि कराङ्गुलीभिः परिचूर्णनीयाः ।
वात्या द्विषोऽमी शतमित्यमर्षात् कृष्णासुतैः पञ्चभिरप्यभाषि ॥

अहिपतिमुखगङ्गामुखपङ्कजदलरविकरेन्द्रनेत्राणि ॥ २७७ ॥
विश्वामित्राश्रमवर्षार्जुनभुजसामवेदशाखाश्च ।
पुराणनरदृष्टचन्द्राः सहस्रसंख्या अमी ज्ञेयाः ॥ २७८ ॥

यथा—

सहस्रपत्रपत्राणां प्रत्येकं स्मेरताकृते ।
सहस्रकरविस्तारं किं सहस्रकरोऽकरोत् ॥

एवमत्र ग्रन्थगौरवभयादसङ्कलिता अपि संख्याः काव्योपयोगाय प्रेक्षावद्भिः प्रेक्ष्याः ॥

इति श्रीजिनदत्त० अर्थसिद्धिप्रताने चतुर्थे संख्यास्तबकः षष्ठः ॥



अथ समस्याक्रमः—

कल्पादिसिन्धुलघुभिर्गुरुता

लघोः पदार्थस्य कल्पादिकालेन सिन्धुना लघुभिश्च गुरुता विधेया ।

कल्पादिकल्पना यथा—

कल्पादिकाले गुरुदेहदेशा 'पिपीलिका राजति शैलतुल्या' ।
तस्मिंश्च सत्यं धरणीधरोऽपि विगाहते देवगिरीन्द्रशोभाम् ॥

यतः कल्पादौ सर्वोऽपि पदार्थो गुरुतरो भवति ततः सर्वत्रापि लघुपदार्थस्यौचित्येन कल्पादौ गुरुत्वमारोप्यम् ।

सिन्धुना यथा—

अहो पयोराशिविलासियादः 'पिपीलिका राजति शैलतुल्या' ।
सदा जनानां महतां निषङ्गो दत्ते लघूनामपि गौरवाणि ॥

यावन्तो दृश्यन्ते नरकरितुरगादयः स्थले जीवाः ।
तावन्तः सलिलेष्वपि जलपूर्वास्तेऽपि निर्दिष्टाः ॥ २७९ ॥

ततः समुद्रस्थितानां लघूनामपि जीवानां गुरुत्वमस्त्येव । लघुभिर्यथा—

कुन्थुप्रमाणेन महत्त्वमाङ्गी 'पिपीलिका राजति शैलतुल्या' ।
यस्मादधोधः परिदर्शनेन सदा लघूनामपि गौरवाणि ॥

इत्यादि । एवं रीतित्रयमध्यात् यत्र या या रीतिरौचित्येन घटते तया तया रीत्या सर्वत्रापि लघुपदार्थस्य गुरुताऽऽरोप्या ॥

युगान्तदूरावलोकगुरुभिर्लघुता विधेया ।

गुरुपदार्थस्य युगान्तेन दूरावलोकेन गुरुभिश्च लघुता विधेया । युगान्तेन यथा—

कल्पान्तकालनलिनीकृतदेहदेशः 'शैलो बिभर्ति परमाणुसमत्वमेषः' ।
पूर्वं युगादिसमये बिभराम्बभूव यो जातरूपधरणीधरसन्निभत्वम् ॥

यतः कल्पान्ते सर्वे पदार्था लघवः सम्भवन्ति, ततः कल्पान्तेन गुरुपदार्थस्य लघुत्वमारोप्यम् । दूरावलोकनेन यथा—

स्थूलोन्नतोऽपि परमाम्बरवर्तमानधावद्विमानचरखेचरकामिनीनाम् ।
अभ्यागतो नयनवर्त्मनि सत्यमेव 'शैलो बिभर्ति परमाणुसमत्वमेषः' ॥

यतो दूरस्थितः पदार्थो गुरुरपि सूक्ष्म इव भासते । गुरुभिर्यथा—

कल्पान्तकालधरणीधरणप्रवृद्धकोलाधिराजतनुमानविलोकनेन ।
'शैलो बिभर्ति परमाणुसमत्वमेष' नो कस्य लाघवमहो गुरुसन्निधाने ॥

इत्यादिगुरुतरपदार्थैर्गुरुपदार्थस्य लघुता विधेया । एवं रीतित्रयमध्याद्यत्र या रीति-रौचित्याद् घटते तत्र तया रीत्या लघुता विधेया ॥

नीरादिषु प्रतिशरीरवशेन युग्मम्

नीरदर्पणमणिभूमिप्रभृतिषु प्रतिबिम्बवशेन एकमपि वस्तु युग्मरूपं भवति । यथा—

पश्चिमाद्रेर्मणिशिरःक्रान्ते पूर्वाद्रिगे रवौ ।
लोकैर्विशङ्क्यते किं भोः 'समुदेति रविद्वयम्' ॥

कृष्णेन बिम्बितवशेन च वैपरीत्यम् ॥ २८० ॥

अधोमुखीकृतकृष्णेन प्रतिबिम्बितेन च वैपरीत्यं कार्यम् । यथा—

कालियाहिग्रहव्यग्रे यमुनायां जगन्निधौ ।
झम्पयाऽधोमुखे जाते विपरीतं जगत्त्रयम् ॥

तडागो दर्पणप्रायजलसंक्रान्तितोऽभवत् ।
जलशय्यीकृतः कृष्णप्रासादः कलशोपरि ॥

अस्ताद्रिमस्तकमणिप्रगुणक्ष्मायामादर्शसन्निभरुचौ प्रतिबिम्बिताङ्गः ।
आशङ्क्यते दिनमुखे वरुणेन सोऽयमभ्युद्यतो दिनकरः खलु पश्चिमायाम् ॥

भूपाल ! तव यज्ञस्य धूमवर्तिरधोमुखी ।
पयोधिप्रतिमा भाति श्वभ्रपावित्र्यहेतवे ॥

एवं रीतिद्वयमध्यात् यत्र या रीतिरौचित्याद् घटते तत्र तया रीत्या निर्वाहणीयम् । केनापि प्रपञ्चेन विपरीतीकृतेन तदुत्तरजगत्त्रयमध्यस्थितः सर्वोऽपि पदार्थो विपरीतो ज्ञानीयः । अस्यैव सूत्रकाव्यस्य प्रतिबद्धा समस्या यथा—

'कल्पादिसमये यस्मिन् कीटिका कुम्भिसन्निभा ।
कुम्भी पुनर्महाशैलस्पर्द्धिदेहाकृतिस्तदा ॥ २८१ ॥
माहात्म्यं तस्य पाथोधेर्व्याख्यातुं कुत्र शक्यते ।
सापि यत्र बभौ तोयकीटिका कुम्भिसन्निभा ।
परमाणुतनोरग्रे कीटिका कुम्भिसन्निभा ॥ २८२ ॥
कुम्भीन्द्रोऽपि सुवर्णाद्रिमानतः कीटिकायते ।
युगान्तसमये यस्मिन् वारणः कीटिकासमः ॥ २८३ ॥
तस्मिन् पिपीलिकामानं लक्षयतामिति न क्वचित् ।
महागिरिशिरःस्थानां वारणः कीटिकायते ॥ २८४ ॥
महापर्वतमानेन वारणः कीटिकायते ।
साधुचित्तानुमानेन पर्वतः कीटिकायते ॥ २८५ ॥

पूर्वाद्रौ रत्नभित्त्यन्तर्जाताद्रिप्रतिबिम्बतः ।
शङ्क्यते शक्रकान्ताभिः किमुदेति रविद्वयम ॥ २८६ ॥
यमुनाह्रदझम्पायामधोवक्त्रे जगन्निधौ ।
तदा सम्भाव्यते नूनं स्वर्गोपरि मही बभौ' ॥ २८७ ॥
चन्द्रान्धकाररविकीर्तिकुकीर्तिसन्ध्या-
रागादिसङ्गकृतवर्णविपर्ययेण ।

कृष्णरक्तपीतनीलादयो वर्णाश्चन्द्रेण श्वेताः क्रियन्ते । यथा—

पर्णोद्गमहिमद्योतद्योतिविद्योतितोऽभितः ।
कैलासगिरिसङ्काशः 'काशते विन्ध्यभूधरः' ॥
जपापुष्पं जातिसमं सुवर्णं रजतप्रभम् ।
सुधाकरकरस्पर्शा'न्मषी चन्दनवद्बभौ' ॥

रक्तपीतश्वेतादयो वर्णा अन्धकारेण कृष्णाः क्रियन्ते । यथा—

कैलासो विन्ध्यसङ्काशः कर्पूरः कज्जलप्रभः ।
जपा तापिच्छगुच्छश्रीरन्धकारैर्विनिर्ममे ॥

कृष्णश्वेतादयो वर्णा बालार्केण सन्ध्यार्केण रविणा वा रक्ताः क्रियन्ते । यथा—

कज्जलं कुसुमच्छायं जातीपुष्पं जपासमम् ।
सुवर्णं पद्मरागश्रि प्रभातार्कप्रभावृतम् ॥

अनया रीत्या सर्वत्राऽप्यौचित्येन वर्णविपर्ययः क्रियते । यदि पुनश्चन्द्रान्धकाररवीणामेव वर्णविपर्ययः क्रियते तदा कीर्त्तिकुकीर्तिसन्ध्यादिभिरेतेषामेव वर्णविपर्ययः क्रियते । यदाऽन्यवस्तूनामपि चन्द्रादिभिरेव तैर्वर्णविपर्ययः क्रियते । यथा—

स्वर्धुनीसलिलसन्निभस्फुरत्तावकीनवकीर्तिमण्डलैः ।
विस्तृतैस्त्रिजगति क्षमापते ! 'शीतरश्मिरिव वीक्ष्यते रविः' ॥

अन्यवस्तूनां यथा—

मेदिनीदयित ! तावकैर्भृशं सङ्कुशः समुदयैः समुच्छ्रितैः ।
क्षीरनीरनिधिसोमकोमलैः 'कज्जलं रजतसन्निभं बभौ' ॥
हिमाद्रिसदृशो मेरुः कुङ्कुमं शशिसन्निभम् ।
भूमीधव ! भवत्कीर्त्या शोभिते भुवनत्रये ॥

कुकीर्त्या यथा—

भूमिपाल ! भवदीयविद्विषन्मेदिनीपतिकुकीर्तिपङ्क्तिभिः ।
प्रावृषेण्यजलवाहकान्तिभिः 'श्यामलो जयति यामिनीपतिः' ॥

अन्यवस्तूनामपि यथा—

मेदिनीदयित ! तावकद्विषत्संविसारिकुयशःकदम्बकैः ।
अन्धकारनिकरैरिवोदितैः 'कुङ्कुमं जयति कज्जलोपमम्' ॥
हिमाद्रिर्विन्ध्यबन्धुश्रीः स्वर्णं मरकतप्रभम् ।
महीधव ! तव द्वेषिकुकीर्तिप्रसरैर्बभौ ॥

सन्ध्यया वर्णविपर्ययो यथा—

पूर्वभूधरशिरस्तटीगतः सान्ध्यरागपटलैः परावृतः ।
प्रेक्ष्यतेऽत्र रजनीमुखेऽधुना 'विद्रुमप्रतिमदीधितिर्विधुः' ॥

अन्यवस्तूनां यथा—

कान्तकोपपरवामलोचनालोचनान्तविततारुणद्युतौ ।
सान्ध्यरागपटले सति क्षणं 'कज्जलं भवति कुङ्कुमोपमम्' ॥
स्वर्णं सिन्दूरपूरश्रि कर्पूरं पद्मरागरुक् ।
जपाकुसुमसङ्काशैः सन्ध्यारागभरैरभूत् ॥

अथ वर्णान्तरसङ्गाद्वस्तूनां वर्णविपर्ययः क्रियते । यथा—

शशिमुकुटललाटे शैलजागण्डपालीविगलितमृगनाभिव्यक्तघर्माम्बुसिक्तः ।
समजनि नरकारिश्यामलो यामिनीशः 'श्रयति मलिनसङ्गात्कश्मलत्वं न को वा' ॥
मसृणघुसृणपङ्कप्रक्रियाप्राग्रजाग्रत्कुचकलशविलासैः कम्बुकुन्दोज्ज्वलोऽपि ।
समरुणदरुणत्वं कामिनीकण्ठहारो 'जगति भवति रागो रागिसङ्गान्न कस्य' ॥
क्षितिधरपतिपुत्रीमौक्तिकव्यक्तिभङ्गीनिलयवलयमालाकान्तिजालावलीढः ।
हिमरुचिरुचिरासीन्नीलकण्ठस्य कण्ठो 'भवति विमलयोगान्निर्मलत्वं न कस्य' ॥

एवमनया रीत्या सर्वत्राप्यूह्यम् ।

धर्मध्यानव्यसनरसिका स्पष्टमष्टाब्दयोगात्
केयं बाला पतितदशना पाण्डुरीभूतकेशा ।
भक्तिव्यक्तप्रणतशशभृत्पादजाग्रन्नखाग्रे
ज्योतिर्जालैस्त्रिदशतटिनीनीरधिक्कारधीरैः ॥

रङ्गेऽस्मिन् रङ्गदभ्रंलिहगृहवलभीवर्यवैदूर्यनिर्य—
ज्ज्योतिर्जातप्रपाता द्युतिकरविधुरीभूतशोभा विभूतिः ।
कालिन्दीकालकान्तिः समजनि रजनीजीवितव्याधिनाथो
'धत्ते को वा कलावानपि न हि मलिनासङ्गतः कश्मलत्वम्' ॥

अहो राहुग्रहग्रस्तसमस्तोज्ज्वलमण्डलः ।
इन्दुः कज्जलबिन्दुश्रीर्हानिः कस्य न विप्लवे ॥

एवं सर्वत्रापि सङ्गवशाद्वर्णव्यतिक्रमो विधेयः ॥

दृष्टान्तबद्धयदिशब्दतया

द्वितीयवस्तुनिदर्शनं दृष्टान्तः, तद्वस्तुस्वभावादन्यस्मिन्नर्थे यदिशब्दे यदिशब्देन युज्यते समस्या पूर्यते ।

यथा—

प्रतीच्यां यदि मार्तण्डः समुदेति स्फुरत्करः ।
तदा सञ्जायते नून 'मग्निस्तुहिनशीतलः' ॥

पुराणैः

एवं सर्वत्र । पुराणमुनिराजचरितैः समस्या पूर्यते । यथा—

अगस्तिमुनिनिष्पीतनिःशेषजलमण्डलात् ।
अहर्पतिमहःशुष्कात् 'समुद्राद्धूलिरुत्थिता' ॥

इति चिन्तनीयम् ॥

वात्सल्यशोकमधुघातवियोगमादैः ॥ २८८ ॥

वात्सल्येन समस्या पूर्यते । यथा—

अतुच्छछुतवात्सल्यपिच्छलीभूतचेतसा ।
सोममूर्त्तिः क्षमी व्याघ्रो जनन्या मन्यते ध्रुवम् ॥

इत्याद्यूह्यम् । शोकेन, मधुना, घातेन, उन्मादेन समस्या पूर्यते । यतः शोकवियोगमादैर्व्याप्तः पुमानघटमानमपि जल्पति ॥

स्वप्नेन्द्रजालिकमतिभ्रमचित्रमाया
मन्त्रौषधीमणितपःपदभङ्गभावात् ।
शौर्योष्मवाञ्छितमनोगतिपुण्यदैव-
प्रश्नोत्तरद्वयसमासविभिन्नसाध्यात् ॥ २८९ ॥

स्वप्नेन समस्या सिद्ध्यति । यतः स्वप्नेऽघटितमपि सर्वं घटते । यथा—

निद्रामुद्रापरिचयलवान्मुद्रितानन्तचिन्ता
चित्ते चित्ते निभृतममृतज्योतिषि म्लानधाम्नि ।
प्रातः स्वप्नेऽरुणकपिशितं प्राग्दिशैकोऽथ कस्मा-
दाकाशस्थं जलचरपदं दृष्टिहीनो ददर्श ॥

'अहो ज्योतिष्कलादक्ष ! मया स्वप्नेऽमुकं दृष्टं, त्वं विचारये'त्यादि कल्पनीयम् । इन्द्रजालेनाऽघटमानमपि सर्वं घटते । तथा मतिभ्रमेणापि सर्वं घटते । चित्रे विसदृशमपि लिखितं संभवति । 'अहो चित्रकृत् ! ईदृशं चित्रं चित्रये'ति वाक्यं रचनीयम् । माययाऽपि विसदृशं सम्भाव्यम् । मणिमन्त्रौषधिप्रभावेन सर्वं साध्यते यस्मादचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । तपसाऽपि सर्वं साध्यते ।

'यद्दूरं यद्दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम्' ॥

इति, तपसाप्यघटमानं सर्वं घटते । पदभङ्गभावादपि समस्या पूर्यते । यथा— 'मृगात्सिंहः पलायते' । मृगमत्तीति मृगात् सिंहविशेषणम्, 'पलाय मांसाय, ते तव ।

अयं मृगः समायाति 'मृगात् सिंहः पलाय ते' ।
ततो वेगात् पलायस्व त्वरितं त्वरितैः पदैः ॥

इत्याद्यूह्यम् । शौर्योष्मणा वाञ्छितेन मनोगत्या पुण्येनाऽघटमानमपि घटते । दैवप्रसादेनाऽसाध्यमपि साध्यन्ते ।

निःश्रीकोऽपि विभो ! विभातसमये पश्यत्यवश्यं मुदा
यस्ते पद्मसमानमाननमसौ स्यादिन्दिरामन्दिरम् ।
श्रीवामेय ! किमु स्तुमस्तव परं यस्य प्रसादाद्भुतै-
'र्मूको जल्पति संशृणोति बधिरः पङ्गुर्नरो नृत्यति' ॥

इत्यादि । प्रश्नेन समस्या पूर्यते । यथा—

कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात् कातरो युद्धे 'मृगात् सिंहः पलायते' ॥

इत्यादि । क्षयसमासविभिन्नसाध्यात् समस्यायां यत्साध्यं पदं भवति तत् क्षयसमासेन विभिन्नं क्रियते, तदा सर्वापि समस्या सिध्यति । यथा—

कर्पूरपूरच्छविवादविद्यासंवादकृच्चुतिशुभ्रिताभ्रे ।
इन्दोर्नृपद्वेषितमोवितान 'सूर्योदये रोदिति चक्रवाकी' ॥

सूर्य यावन्नृपसम्बोधनम् ॥

श्रीहट्टकेश्वरजगत्प्रलयग्रहास्त-
पाथोधिमन्थसमयप्रतिबिम्बभावैः ।
सङ्ग्रामचक्रिपुरचन्दनशस्त्रपातै-
श्चण्डीशसद्गुरुगुरुताऽऽपि रथोपमानैः ॥ २९० ॥

एकैकभुवनेऽन्यभुवनानामवतारः । पूर्वं पाताले श्रीहट्टकेश्वरस्वामिनमस्कारेण स्वर्लोकावतारः । जगत्प्रलयेन मर्त्यलोकावतारः । ग्रहास्तेन नभोलोकावतारः । यथा—

श्रीहट्टकेश्वरस्वामिनमस्करणकारणात् ।
सुरेन्द्रादिभिरायातैः 'स्वर्गः पातालमाययौ' ॥
कदाचिच्चारभेदेन क्रमादस्तमुपागतैः ।
ग्रहैः सम्भाव्यते नूनं 'पातालं प्रययौ नभः' ॥

अथ पृथिव्यां पाथोधिमन्थनसमयेन स्वर्गपातालयोरवतरणं प्रतिबिम्बभावेन नभोलोकावतरणं विधेयम् । यथा—

समुद्रमथनारम्भे मिलितैरमरादिभिः ।
पृथिव्यां स्वर्गपाताले दृश्येते स्फुटमागते ॥
दर्पणप्रतिमोल्लासिजलपूरसरोम्बरे ।
प्रतिबिम्बच्छलादेतद् 'भुवि व्योम समागतम्' ॥

अथ नभसि संग्रामेण स्वर्गस्य, हरिश्चन्द्रचक्रिपुरेण मर्त्यलोकस्य, चन्दनशस्त्रपातैरहिलोकस्याऽवतरणं विधेयम् । यथा—

रणप्रवणवीराणां विलोकनकुतूहलात् ।
समायातैः सुरेन्द्राद्यैः 'स्वर्गो नभसि दृश्यते' ॥
आकाशान्तरसंचारिहरिश्चन्द्रपुरीच्छलात् ।
भौमस्य मिलनायेव 'जगाम जगतीं नभः' ॥
श्रीरामरावणरणे कपिमण्डलेन शस्त्रीकृतैर्मलयद्रुमचक्रवालैः ।
रिङ्गद्भुजङ्गमकुलैः परितः स्फुरद्भिः 'सम्भाव्यते नभसि सर्पपुरं प्रसर्पत्' ॥

अथ स्वर्गे चण्डीशाभरणरूपेण भुजङ्गमलोकस्य, सद्गुरुताभिर्मर्त्यलोकस्याऽवतरणं विधेयम् । नभोलोकस्तत्रैवासीत् । यथा—

श्रीकण्ठकण्ठदोर्दण्डमण्डनैरहिमण्डलैः ।
अयं भुजगलोकोऽपि स्वर्लोककलिताश्रयः ॥

अभ्रंलिहगृहव्यूहचन्द्रशालाविलासिभिः ।
नरनारीगणैर्मन्ये मर्त्यलोको द्युलोकगः ॥

उपमानैः समस्या पूर्यते । उपमानानि सदृशवस्तूनि । यथा—

जन्म स्तोत्रे जिनेशस्य मेरौ देवाङ्गनामुखैः ।
परितः स्फुरितैः शङ्के 'शतचन्द्रं नभस्तलम्' ॥

इत्यादि । तद्गुणाधिक्येनेति चतुःश्लोकोपरि शेषपदम् । पदार्थस्य गुणादधिकगुणपदार्थेन समस्या पूर्यते । यथा—

त्रैलोक्ये स्फुरतः शुद्धयशसः पुरतस्तव ।
सोऽपि विश्वम्भरानाथ ! 'सोमः श्यामपुर्बभौ' ॥

तद्गुणाधिकं यशः ॥

त्वद्गाम्भीर्यगुणस्याग्रे समुद्रो गोष्पदायते ।
सन्मानससरोजान्तर्गगनं भ्रमरायते ॥

एवमौचित्येन तद्गुणाधिकत्वमारोप्यम् ॥

श्रीमद्वायडगच्छवारिधिविधोः पादारविन्दद्वये
येन श्रीजिनदत्तसूरिसुगुरोः शृङ्गारभृङ्गायितम् ।
स श्वेताम्बरमौलिरत्नममरः श्रीवीरतीर्थङ्कर-
प्रह्वात्माऽकृत काव्यकल्पलतिकावृत्तिं सतां संमताम् ॥

सिक्तेयमुद्धृतैः शास्त्राब्धिभ्यः सारसुधारसैः ।
काव्यकल्पलताऽऽकल्पं तनोतु सुमनोमुदम् ॥

काव्यमेव परब्रह्मास्वादसोदरशर्मदम् ।
आलोकं पालयामास कालिदासकवेर्यशः ॥

वाल्मीकिव्यासयोर्विश्वे विश्वदिङ्मूलकूलगा ।
कल्पान्तोल्लङ्घिनी कीर्तिः काव्यादेव विजृम्भते ॥

इति श्रीजिनदत्तसूरिशिष्यमहाकविश्रीमदमरचन्द्रविरचितायां काव्यकल्पलताकविशिक्षावृत्तौ अर्थसिद्धिप्रताने चतुर्थे समस्यास्तबकः सप्तमः समाप्तः ॥

---

सम्पूर्णश्चाऽयं चतुर्थोऽर्थसिद्धिप्रतानो ग्रन्थश्च ।

---



वन्दामहे मुदा शैवचण्डकोदण्डखण्डनम् ।
जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥

❀ श्रीः ❀

# काव्यकल्पलतावृत्तेः

## कारिकाणामनुक्रमणिका ।




| पद्यानि | श्लो० | पृ० |
|---|---|---|
| अः कृष्ण आ स्वयम्भूरिः | १०३ | ८७ |
| अआ इई उऊ अंअः | २२ | ९ |
| अई च्विप्रत्ययाद् गौणौ | ८९ | ८२ |
| अए ङो इष्टरेफेण | ९० | ८३ |
| अकं दुःखाघयोरङ्को | १२४ | ८९ |
| अकार्कागाग्रयाग्रावार्घा- | ४० | ९२ |
| अङ्कुराणि शिशुः साधु- | २०० | १४० |
| अखण्डमण्डनाव्यग्र- | १४४ | ३९ |
| अखिलान्यूनाजस्रा- | ४३ | ९३ |
| अगम्यगमनापेय- | १९९ | १३९ |
| अङ्गद्वेषिसुहृत्पापैः | १९३ | १३९ |
| अङ्गानि वृद्धिशेषे स्यु- | १३० | ८९ |
| अङ्कोद्गतनशाखा- | १९८ | ४६ |
| अक्षोऽग्रकीलेऽक्षौ सीम- | १३४ | ८९ |
| अजश्छागे हरे विष्णौ | १३२ | ८९ |
| अतः स्यान्निर्देशे पञ्च- | १८१ | ९२ |
| अति प्राक्प्रकर्षार्थे | १६६ | ९१ |
| अथ वर्णानि कथ्यन्ते | ४५ | २४ |
| अथाऽव्ययानि कथ्यन्ते | १५० | ९० |
| अथो कथादिके राज- | ११८ | ३९ |
| अथोदग्रसमग्रत्व- | ११२ | ३९ |
| अदोऽद्रिरब्दाधोर्द्धिष्वा | ४१ | ९२ |
| अद्धया निष्याशयौ राशि- | ६४ | ३६ |
| अधिकस्वकस्वकीयक- | ३ | ४८ |
| अधिदैवतविद्यागुरु- | १८७ | ४६ |
| अनवो मघवा भूपः | १५७ | ४१ |
| अनङ्गवङ्गसङ्गत्या | १४९ | ४१ |
| अनयेनेव नृपति- | ६ | १०५ |
| अनर्थे सख्यामावल्यां | १४३ | ९० |
| अनिरुद्धार्त्तिपतृमुखाः | ५५ | ३५ |
| अनुप्रासस्य सिद्ध्यर्थं | ७१ | ३६ |
| अनुर्लक्षणवीप्सेत्थं- | १७० | ९१ |
| अनुष्टुप्छासनं छन्दो- | ३ | १ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| अनुष्टुभि सनौ नाद्यात् | ९ | ३ |
| अन्तर्मध्येऽन्ते स्वीकारे | १७९ | ९२ |
| अन्धोऽन्धकारेऽक्षिहीने | १३७ | ८९ |
| अपूर्वश्चाऽद्वितीयश्चा- | २६ | ५० |
| अप्राक्पदसम्बद्धस्या- | ३८ | १४ |
| अबलिष्ठानि रोगार्त- | १९८ | १४० |
| अब्धौ द्वीपाद्रिरत्नोर्मि- | ६६ | २५ |
| अभिर्वीप्सालक्षणयो- | १७६ | ९२ |
| अभ्यासः स्याद्विभक्तीना- | ३४ | १०७ |
| अभ्यासमभ्यासमता | १०० | ३८ |
| अमङ्गलानि घूकाहि- | १७४ | १३९ |
| अमावचनः कल्पः | ५४ | २४ |
| अम्लानि बीजपूराणि | २३३ | १४२ |
| अरण्ये हि वराहेभ- | ७० | २५ |
| अरमहररेर्यराखा | ४२ | ५२ |
| अरुणारुणदक्कोण- | ९२ | ३८ |
| अर्हप्रबर्हसुन्दर- | ८३ | ३७ |
| अलकायाश्चैत्ररथा- | ३७ | ३४ |
| अलङ्कारणसामर्थ्य- | १७७ | ९२ |
| अलिः सुरापुष्पलिहो- | १४२ | ९० |
| अवधाननिधानश्रीः | १०८ | ३८ |
| अवष्टम्भे बले धातु- | १४९ | ९० |
| अविमेषे रवौ भूमि- | १४५ | ९० |
| अश्वे खरखुरात्खात- | ७७ | २६ |
| असतोऽपि निबन्धेना- | ९४ | २७ |
| असिपत्रद्रुपत्राणि | १६५ | १३८ |
| अस्थिराणि नदीपूर- | १९० | १४० |
| अह क्षेपे नियोगे चा- | १८३ | ९२ |
| अहहामरासुराद्या | ४४ | ९३ |
| अहादिसंयुत वर्णो | १८ | ३ |
| आङीषदर्थेऽभिव्याप्तौ | १५१ | ९० |
| आदिक्षान्तलिपौ कादि- | १७३ | ४२ |
| आदित्यनित्यसविता | १५९ | ४१ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| आदित्यमेरुचन्द्र- | २५० | १४४ |
| आदौ साध्यपदं स्थाप्य- | ७ | २ |
| आदौ स्युर्गुरवो यावत् | १५ | ३ |
| आद्यं निर्लाञ्छनमियं | ४२ | १०९ |
| आद्याद् गुरोरधो ह्रस्व- | १६ | ३ |
| आधाराः स्वर्नभोभूदि- | २४१ | १४३ |
| आन्वीक्षिकीत्रयीवार्ता | ५५ | २४ |
| आमन्त्रणाह्वानयोरों | १५५ | ९० |
| आमोऽपक्वे रोगभेद- | १३९ | ८९ |
| आरामः सुमनोरामा- | १८३ | १३९ |
| आरोप्य वर्ण्यवस्तूनां | १४४ | १३० |
| आरोप्यारोपविषयौ | १८२ | ४५ |
| आरी रीरी शनिर्भौमे | १४१ | ९० |
| आर्तं मार्तण्डचण्डश्री- | १६२ | ४२ |
| आलम्बने विज्ञाने स्या- | १८० | ९२ |
| आशा ककुभि तृष्णाया- | १४६ | ९० |
| आशादाशार्हवद्वाणः | १३९ | ४० |
| आश्रमेऽतिथिपूजैव- | ७१ | २५ |
| आश्रितातिथिविप्रादि | १५२ | १३४ |
| इः स्यात्खेदे प्रकोपोक्ता- | १५२ | ९० |
| इए ङसिङसौ रेफे | ९२ | ८३ |
| इओ ङौ क्लीबवृत्तित्वे | ९३ | ८४ |
| इतरान्तो नञ्पूर्वो | १५ | ३२ |
| इति परिवृत्तिसहा ये | १७ | ३३ |
| इति शब्दा नृपामात्य- | १७२ | ४२ |
| इति स्वरूपे सांनिध्ये | १६७ | ९१ |
| इत्याद्या लक्षणाशब्दाः | २०६ | ४७ |
| इनः स्वामिनि सूर्ये स्या | १३८ | ८९ |
| इन्द्रियानन्दभूत्यादि- | ५८ | ११६ |
| इन्द्रेभ्योऽवरजा वैन- | ४६ | ३५ |
| इन्द्रे सहस्रनेत्राणि | २८ | ३४ |
| इष्टका तिलकं केतुः | १०३ | १२४ |
| इष्टप्राप्त्यै रिपूच्छित्त्यै | १४२ | १२८ |
| उं प्रश्नेऽङ्गीकृतौ रोषे- | १५४ | ९० |
| उः प्राधान्य प्रकाशे च | १५३ | ९० |
| उच्चकैरजतान्तश्री- | ६२ | ७० |
| उच्चभद्रासनं वप्र- | १४१ | १२८ |
| उत्कर्षमुपमेयस्य | १०० | १२२ |
| उत्प्रेक्षाद्योतकाः शङ्के | ४५ | १०९ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| उत्प्रेक्षायां पञ्चम्यर्थे | १८४ | ९२ |
| उदितं क्रमाच्च कूटो- | २९ | ५१ |
| उदितं भ्रमाद्वरोचित- | २० | ४९ |
| उद्देशवचनं पूर्वं | १९ | ३३ |
| उद्याने सरणिः सर्व- | ६८ | २५ |
| उपकण्ठस्थवक्षोज- | १२ | १०६ |
| उपकारेन्द्रियाण्यक्षी | ५३ | ११३ |
| उपमाद्यानलङ्कारा- | १ | १०५ |
| उपमानस्य लोपे तु | ३ | १०५ |
| उपमानोपमेयत्वं | १३ | १०६ |
| उपमेयोपमाद्यास्तु | ३६ | १०८ |
| उपमैव विनेवादि | ३७ | १०९ |
| उरगस्य च दंष्ट्राया- | १४८ | ९० |
| उषा स्याद्बाणदैत्येन्द्र- | १४७ | ९० |
| उष्णानि तरणिर्वह्नि- | २२२ | १४२ |
| ऊर्जे तुर्यान्तयभर- | १० | ३ |
| ऊलाधितराजितसम- | ८५ | ७९ |
| लृर्देवसूर्लृवाराही | १०४ | ८७ |
| एकमात्र ऋजुर्ह्रस्वो- | १७ | ३ |
| एकस्मिन्नुपमेये तु | ५ | १०५ |
| एकैकेनापि धर्मेणो- | ३३ | १०७ |
| एकोऽन्यः केवलः श्रेष्ठः | १२५ | ८९ |
| एतच्चतुर्विधं वाद्यं | २१३ | १४१ |
| एवमर्थे समाप्ते स्या- | १६८ | ९१ |
| एवं परावृत्तिसहान्न | ७० | ३६ |
| एव भवन्त्युपमाया | ४३ | १०९ |
| एवं साधारणैः शब्दै- | ४२ | १६ |
| एषां स्यान्नामभिः श्लेषो | २ | ४८ |
| ओघः प्रवाहः सङ्घातो- | १३१ | ८९ |
| ओषऽयादक्षजायाश्च | २७ | ३४ |
| ओसि आमि जसि भ्यामि- | ८८ | ८१ |
| औचित्यरचितैः संख्या- | २४९ | १४३ |
| कः पापायसि कुत्साया- | १५६ | ९० |
| कक्कोकुक्कूखखुगगौ- | ४५ | ५३ |
| कटाहमणिका कुण्डी | ११० | १२४ |
| कटूनि राजिका हिङ्- | २३० | १४२ |
| कट्याः सूत्रगणो मौञ्जी- | १२० | १२५ |
| कठोररटिता घूक- | २०७ | १४१ |
| कठोराणि शिला शैलो | २२६ | १४२ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| कडारस्फारहारिद्र- | ९३ | ३८ |
| कण्ठबाहुकरोरोज- | ९९ | २५ |
| कण्ठस्य कम्बुरंसस्य | २६ | १०६ |
| कथापुरादिसर्वार्थ- | २९ | ९ |
| कपिकपिशकपिलहरित- | ९४ | ३८ |
| कपोलकुण्डले ताल- | १०५ | १२४ |
| कपोललेश्योर्णनाभ- | ९९ | १२२ |
| कमलदलरावणाङ्गुलि- | २७६ | १४७ |
| कमलाधिपपद्मेशा | ५६ | ७१ |
| करटाक्षिपयोबिन्दु- | १२४ | १२६ |
| करपत्रनिरङ्गाद्रि- | १२८ | १२७ |
| करशाखाः श्रीभर्तु- | २७२ | १४७ |
| कर्णपाशो बाहुपाशः | १२१ | १२५ |
| कलभा निषादरावा | २०५ | १४१ |
| कल्पवर्योऽत्र भङ्गोऽभू- | ९९ | ८४ |
| कल्पादिसमये यस्मिन् | २८१ | १४९ |
| कल्पादिसिन्धुलघुभि- | २८० | १४८ |
| काकः पिपीलिका दुर्गा- | ८० | ११९ |
| काकः पीठसर्पणिस्या- | १२६ | ८९ |
| काकोलो काकनाशाऽथ | १२८ | ८९ |
| काचो मुद्गस्तथा नील-। | ८४ | १२० |
| कामिदन्तेषु कुन्दानां | १०० | २७ |
| कामे विषमादस्त्राणि | ५४ | ३५ |
| कार्पासकाशकर्पूर- | ६५ | ११८ |
| कार्यप्रवृत्तौ श्रमतः | १५७ | १३६ |
| कालिन्दीभ्यः सोदरास्तु | ३३ | ३४ |
| कियन्मात्रेषु सिद्धेषु | ३१ | ११ |
| कियाहो हंसचच्चञ्च्री | ८९ | १२१ |
| कुञ्चिमित्राङ्गुलीतल्प- | १३७ | १२८ |
| कुण्डं वापी श्रुतिः कूपो | १०९ | १२४ |
| कुन्ददाडिमबीजानि | २४ | १०६ |
| कुभार्यानिःस्वकुग्राम- | १८६ | १४० |
| कुमारसारसेनानीः | १३२ | ४० |
| कुमारे शस्त्रशास्त्रश्री- | ६० | २५ |
| कुम्भिकुम्भी गिरी चक्रौ | २८ | १०७ |
| कुम्भीन्द्रोऽपि सुवर्णाद्रि- | २८३ | १४९ |
| कुलसत्कारोचितकस- | ७ | ४९ |
| कुशी प्राजनकं बाहु- | १३३ | १२७ |
| कुश्यङ्कुशकुशाग्राणि | १६६ | १३८ |
| कुसुमं मालतीतुल्यं | ४ | १०५ |
| कूर्मो वराहखट्वाङ्ग- | ७९ | ११९ |
| कृतघ्नान्त्यजपाषण्ड- | १७५ | १३९ |
| कृष्णकृष्णतालकाल- | ९५ | ३८ |
| कृष्णाद्रक्तानि गुञ्जातः | ६५ | ७१ |
| कृष्णार्थाग्रगतटिनी- | ५५ | ६७ |
| केवलोऽथान्तरत्यन्ता- | २७ | ६० |
| केसरश्चन्द्रको लग्न- | १४० | १२८ |
| को ब्रह्मात्मप्रकाशार्क- | १०५ | ८८ |
| कोमलान्यङ्गनाङ्गानि | २२५ | १४२ |
| कौशाम्बी त्रिपुरी काशी | २४३ | १४३ |
| क्रमतोऽपूर्वोऽर्चिता- | २८ | ५१ |
| क्रियाः करोतिप्रमुखा- | ३ | २९ |
| क्रूराणि सर्पमार्जार- | १९९ | १४० |
| क्षाराणि लवणं सौव- | २३१ | १४२ |
| क्षिप्राग्रं च क्षुद्र - | २५ | ५१ |
| क्षुद्दीपशापदुर्वासः- | २२४ | १४२ |
| गङ्गा गोदावरी रेवा | १७९ | १३९ |
| गजजातियामसेना- | २५९ | १४५ |
| गजे सहस्रयोधित्व- | ७८ | २६ |
| गर्तापिधानं चङ्गेरी- | ११३ | १२५ |
| गर्दभो मूषको दुर्गा- | ९८ | १२२ |
| गर्भप्रकाशवृत्तानि | ११८ | १२५ |
| गवलं तालतापिच्छ- | ७७ | ११९ |
| गवाक्षसारफलर्कं | १०४ | १२४ |
| गस्तु गातरि गन्धर्वे | १०७ | ८८ |
| गान्धारगायिनो हंसाः | २०४ | १४१ |
| गिरमाङ्गिरसक्षीब- | १७० | ४२ |
| गुणात् श्रिया युतभ्राजि- | २१ | ४ |
| गुल्मं फालं वयःसार- | ११६ | १२५ |
| गुहनेत्रराशिमासाः | २७० | १४६ |
| गूढोगीतं घाटो- | ८ | ४९ |
| गोपानसी रथो वंशाः | १३८ | १२८ |
| गोपेभ्यः प्रभुसङ्काशाः | ४८ | ३५ |
| गौरीगौरीशकालीश- | १२७ | ४० |
| गौर्वाहिको गौरेवाऽयम् | १८१ | ४४ |
| ग्रामीणपारिपार्श्विक- | २०३ | ४७ |
| ग्रामे धान्यलतावृक्ष | ६३ | २५ |
| ग्रीष्मे पाटलमल्ली- | ८० | २६ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| घण्टाशिरस्कधत्तूर- | ११२ | १२४ |
| घण्टाश्चैत्यगजादीनां | २११ | १४१ |
| घाटोपचितोच्चराचित- | ३० | ६१ |
| चक्रवालत्रिशालश्री- | ७९ | ३७ |
| चतुरस्राणि व्यजनं | १०१ | १२३ |
| चतुरा चतुरास्यश्रीः | १९२ | ४१ |
| चतुष्कतद्धिताख्यात | २९ | ६ |
| चतुष्कभक्तयाहट्टे | १३३ | ८९ |
| चत्वारोऽत्र च्छन्दः- | २ | १ |
| चन्द्रान्धकाररविकीर्ति- | २८८ | १५० |
| चन्द्रे कुलटाचक्रा- | ८५ | २६ |
| चन्द्रेभ्यः कान्ते चन्द्रेभ्यो | ६३ | ३६ |
| चन्द्रेभ्यस्तनयाः ताभ्यां | ६६ | ३६ |
| चातकः ककुहः केतु- | २०२ | १४१ |
| चारुप्रचारहारि- | ८२ | ३७ |
| चित्रेन्द्रजालवाच्यर्द्धि- | १८३ | ४९ |
| चैत्याङ्कवृक्षगजमेघ- | ९९ | ११३ |
| चोऽन्योन्यार्थसमाहारा- | १९७ | ९१ |
| च्विना आमि उसि स्वरे | ९१ | ८३ |
| छः सूर्ये छेदके छं तु | १०९ | ८८ |
| छत्रव्यजनचालिन्यो | १०६ | १२४ |
| छन्दःस्वनुष्टुब्मुख्येषु | ३९ | १४ |
| छविराजितछविलासि- | ९ | ४९ |
| छेदे बन्धे च धा गुह्य- | ११३ | ८८ |
| जङ्घायुगस्य च स्तम्भो | ३१ | १०७ |
| जनितश्लेषसश्लेषै- | ४८ | ६२ |
| जन्याद्विधातृकरसूक्- | ९ | २९ |
| जन्होः पुत्र्यः कालिन्द्यां क- | ६५ | ३६ |
| जयमालामणिहार- | २७७ | १४७ |
| जम्भात्पाकाद्बलाद्वृता- | ३० | ३४ |
| जलकेलौ सरः क्षोभ | ९१ | २७ |
| जलदादिषु पूर्वपदे | १६ | ३३ |
| जलदेभ्यः सुहृत्तुल्या | ६९ | ३६ |
| जलेऽक्षिण वस्तु घण्टीशे | १०८ | ८८ |
| जातीपत्रीलवङ्गैला- | २१८ | १४१ |
| जितारातिः पुरारातिः | १२३ | ३९ |
| जिह्वायास्त्वञ्चलो दोला | २५ | १०६ |
| जीवाजीवोपकरण- | २७२ | १४७ |
| जो नष्टे गायने चारु- | ११० | ८८ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| ज्ञाते तस्तस्करक्रोड- | ११२ | ८८ |
| ज्ञानाद्वर्द्धो टोपचित- | ३१ | ६१ |
| ज्येष्ठसभावत्यग्रे | १८८ | ४६ |
| ज्योत्स्ना नदी विधुकला | ९६ | ११३ |
| ढुक्का ढक्का डमरु- | २१५ | १४१ |
| टोपतिराहितततनत- | १० | ४९ |
| डलयोश्च विरोधो न | १८८ | १०१ |
| णिनन्तः ख्याकृतः शब्दे- | ८१ | ७६ |
| तज्ज्ञाभिज्ञसुखज्ञाः | ४ | ४८ |
| ततं वीणादिवाद्ये स्या- | १३६ | ८९ |
| ततं वीणाप्रभृतिकं | २१२ | १४१ |
| तत आदौ परिप्रश्ने | १८२ | ९२ |
| ततिभिर्विततं माला- | ८० | ३७ |
| ततो लम्बः प्रलम्बघ्नः | १४५ | ४१ |
| तत्त्वब्रह्मोपनिष- | १८९ | ४६ |
| तथा वसन्त एवान्य- | १०४ | २७ |
| तदर्थान्यपदैः स्वान्य- | ३० | १० |
| तद्धिता घ्वाङ्क्षावान्दु- | १९ | १०६ |
| तद्यागव्याप्तिपूजासु | १७५ | ९२ |
| तरस्त्वरोचितो भाव- | ५० | ६५ |
| तस्मिन् पिपालिकामानं | २८४ | १४९ |
| तार्क्ष्येऽरुणेभ्योऽवरजा | ५७ | ३५ |
| ताम्बूलं गीतवादित्र- | १७२ | १३९ |
| ताम्बूलरागो मञ्जिष्ठा | ९१ | १२१ |
| तिक्तानि मरिचं शुण्ठी- | २३२ | १४२ |
| तिमिरस्य तथा मुष्टि- | ९६ | २७ |
| तिलप्रसूनदण्डौ चा- | २३ | १०६ |
| तीक्ष्णानि प्रतिभाख्याणि | १६४ | १३८ |
| तीक्ष्णे वैश्वानरे कामे | ११८ | ८८ |
| तीव्रप्रयत्नोच्चारेण | १९ | ३ |
| तुर्यं पुनरलङ्कार- | ६ | २ |
| तुलावेला तर्कवर्त- | १०८ | १२४ |
| तृट् लिप्सायां पिपासायां | १२३ | ८९ |
| तेजस्विनो रविश्चन्द्र- | २३६ | १४३ |
| तेनापि न हि तत्प्राप्तिः | १५० | १३३ |
| तोष्यमेयाधाराधेय- | ३५ | १०८ |
| त्रिकोणान्यथ दम्भोलि- | १२७ | १२७ |
| त्रिदिवेभ्यः स्वःपुरीभ्यः | २९ | ३४ |
| त्रिफलात्रिशूलपुरुषाः | २९५ | १४४ |

| पद्यानि | श्लो० | पृ० |
|---|---|---|
| मार्गामिषतो व्याप- | ४१ | १०९ |
| त्वमत्राऽऽचयश्चक्रे | ९८ | ८५ |
| दक्षनक्षत्रनाथश्रीः | १६९ | ४२ |
| दण्डदण्डधरो ध्वान्त- | १६५ | ४२ |
| दधिम्रक्षणचूर्णास्थि- | ६६ | ११८ |
| दविष्ठविनिविष्टोऽथ | १०४ | ३८ |
| दानवास्तु विप्रचितिः | १०९ | २८ |
| दानिनः कामधुक् चिन्ता- | २३९ | १४३ |
| दामशैलूकशूलानि | १३४ | १२७ |
| दारिद्र्यकृद्रिपौ मित्रो | ९७ | ८४ |
| दिग्देशकुम्भिपालाः | २६६ | १४६ |
| दिग्भ्यो वासांसि श्यामेभ्यः | ३८ | ३४ |
| दिङ्मात्रमेकदेशः | २०५ | ४७ |
| दिव्यार्थमण्डलश्रोणी- | १२२ | १२५ |
| दीर्घह्रस्वाक्षरद्वन्द्व- | ४३ | १९ |
| दीर्घाणि वेणीसीमन्त- | १२९ | १२७ |
| दीर्घादिनान्तशब्दैः | ८७ | ८० |
| दुःखहेतौ च हं रोष- | १६५ | ९१ |
| दुर्गन्धानि वपुःस्वेद | २२० | १४२ |
| दूते स्वस्वामितेजःश्री- | ७३ | २५ |
| दूष्यं घण्टिका मुष्ट्यंस- | ११५ | १२५ |
| दृगन्ताधरजिह्वास्- | ८७ | १२१ |
| दृग्भ्यः श्रुतयो विषेभ्यः | ६८ | ३६ |
| देवदेवीस्थितिं विद्या- | ११३ | २८ |
| देव्यां विज्ञानचातुर्यं- | ५७ | २५ |
| देशे बहुखनिद्रव्य- | ६२ | २५ |
| दैत्येभ्योऽरयोऽर्के सह- | २२ | ३३ |
| दैवाज्जैवातृकः सोमः | १६८ | ४२ |
| द्रवाण्यमृतपानीय- | २३४ | १४२ |
| द्राक्षाम्रदाडिमीरम्भा- | २२९ | १४२ |
| द्वादशात्मा महात्मासौ | १६० | ४१ |
| द्वादशानामप्यर्काणां | १०७ | २८ |
| द्विट्मुण्डपुण्डरीकाक्षो | १३७ | ४० |
| द्वितीयेऽनुष्टुभः पादे | ४१ | १५ |
| द्वीपः शरावः कंसाल- | १०७ | १२४ |
| द्वीपश्रीपतिदैत्यारि- | १४२ | ४० |
| धन्विनः शिवकृष्णेन्द्रा | २४० | १४३ |
| धराधीशानिशानश्री- | १२० | ३९ |
| धर्मः सद्वचनं सन्तः | १८५ | १४० |
| धर्मकर्मकर्मसाक्षी | १६१ | ४२ |
| धर्मशर्मकरः पुण्य- | १०९ | ३९ |
| धर्मोपमावाचकयो- | २ | १०५ |
| धवलप्रबलो लक्ष्य- | ९० | ३७ |
| धामभावौ प्रभावश्च | ७९ | ७६ |
| धार्यत्वेंऽशोरंशुमाली | १२ | ३२ |
| धार्यात ध्वजास्त्रपाण्यङ्क- | ६ | ३० |
| धीरोचितो धनव्या- | १२ | ४९ |
| धूर्यानवदने भारे | १२२ | ८९ |
| ध्वान्ताहिभ्यो द्विषः कृष्णा- | ७० | ७२ |
| ध्वान्ताहिविषनागाब्धि- | ४७ | १०९ |
| ध्वान्तेभ्यो रिपवो गोधु- | २३ | ३३ |
| नखेन्द्रगोपखद्योताः | ८८ | १२१ |
| नञीषदर्थे सादृश्ये | १६१ | ९१ |
| न पूर्वोत्तरभागस्थै- | ३५ | १३ |
| ननुसमशुभसम्पन्ना | ७७ | ७४ |
| नन्वाक्षेपे परिप्रश्ने | १७१ | ९१ |
| नभोदिनेभ्यो रत्नानि | २४ | ३३ |
| नम्रकम्रं काम्यकाम- | ८६ | ३७ |
| नवीनतपनीयश्रीः | ७५ | ७३ |
| नवीनपीनसद्वस्क- | ११६ | ३९ |
| नष्टाग्निः स्वस्पृहालब्धि- | १८४ | १४० |
| नाना विनोभयानेका- | १७२ | ९१ |
| नाभेरम्भोजमावर्तो | २९ | १०७ |
| नाम्ना दतचपषा | १३ | ३ |
| नारङ्गचूतकरुण- | ११७ | १२५ |
| नारायणदामोदर- | १०८ | २८ |
| नाशावयवयोः स्यादी- | १३५ | ८९ |
| नासावंशविनायक- | २५१ | १४४ |
| निकरनिवहौ च नियमो | १३ | ४९ |
| निकरेण प्रीतिकरं | ७६ | ३७ |
| निकामरामातिमात्र- | ११७ | ३९ |
| निपातायतनद्रव्य- | १५४ | १३९ |
| निमेषोन्मेषरसना- | १९२ | १४० |
| निर्घातरथघोषज्या- | २१० | १४१ |
| निर्देशार्थे विकृत्यर्थे | १७३ | ९१ |
| निर्माल्यभङ्गिकरणी- | १९९ | ४६ |
| निर्वर्ण्याभ्यर्णसन्नद्ध- | ९८ | ३८ |
| निस्तु नेतरि तुः स्तुत्यां | ११४ | ८८ |

